दृष्टः कश्चिदुपायो मे सीतोपस्थानकारकः ।
रुचितश्चेत्स्वया बुद्ध्या राक्षसेश्वर तं शृणु ॥ २१
अहं द्विजिह्वः संह्रादी कुम्भकर्णो वितर्दनः ।
पञ्च रामवधायैते निर्यान्त्वित्यवघोषय ॥ २२
ततो गत्वा वयं युद्धं दास्यामस्तस्य यत्नतः ।
जेष्यामो यदि ते शत्रून्नोपायैः कृत्यमस्ति नः ॥ २३
अथ जीवति नः शत्रुर्वयं च कृतसंयुगाः ।
ततः समभिपत्स्यामो मनसा यत्समीक्षितम् ॥ २४
वयं युद्धादिहैष्यामो रुधिरेण समुक्षिताः ।
विदार्य स्वतनुं बाणै रामनामाङ्कितैः शितैः ॥ २५
भक्षितो राघवोऽस्माभिर्लक्ष्मणश्चेति वादिनः ।
तव पादौ ग्रहीष्यामस्त्वं नः कामं प्रपूरय ॥ २६

G 6 43 28
B 6 64 26
L 6 43 26

—[c]) D6 यदीच्छसि यथा, D6 7 8 T1 G2 यदीच्छसि तथा(T3 °दा), D10 11 T1 M3 Cg t यदीच्छसि तदा, G1 यदीच्छति तदा (for यदीच्छति तदा) — For 20, Ś Ñ1 B1 D1-4 8 12 13 subst

1135* लब्ध्वा पुनस्तव वैदेही किमस्मात्राभिभाषसे ।
यदीच्छसि सतीं सीतामवशा वशमागताम् ॥

[(l 1) Ñ1 तु, D8 तां (for त्व). Ñ1 त्व प्रभाषसि B1 D3 भाषि° D6 त्व न जल्पसे (for नाभिभाषसे) —(l 2) Ñ1 हि ता (for सतीं) Ñ1 वशमागमात्मवत् प्रभो, D6 वशमा वर्तमानम् (for the post half) ]

while Ñ2 V B2-4 subst

1136* लब्धोपायाः वैदेही किं बुधैर विकल्पितैः ।
स्व यदीच्छसि वैदेहीं वचनं तु शृणु प्रभो ।

[(l 1) Ñ2 V1 विगविते —(l 2) V3 B4 यद् (for यदि). V1 तां सीता (for वैदेहीं) ]

21 [a]) Ś B1 D1-4 8 12 13 [उ]पादाय (for [उ]पस्थान ) M1 3 -साधन (for कारक) —[b]) Ś D2 8 12 T2 3 M1 3 Cg रुचिरश्च, B1 रुचित, D7 रुचिर, Ct as in text (for रुचितश्च) Ś1 D8 12 चाय(D8 12 °स्य) वक्ष्यामो, Ś1 चास्य बुध्यामो, N V B3 4 चैव(N1 चापि, B4 चलु) मे बुद्ध्या, B1 D1-3 7 च(B1 चेत्) स्वबुद्ध्या मे (for चेत्स्वया बुद्ध्या). D4 चरित चापि मे बुद्ध्या —[d]) Ś D1-4 8 12 13 राक्षसर्षभ (for राक्षसेश्वर) L2 D4 G2 तच्च, B3 मे (for त) B1 राक्षसेंद्र शृणुष्व तत्, D7 8-11 राक्षसेश तत शृणु

22 [a]) Ś1 D8 12 अनर्हजिह्व D6 सह्रादा, D1 सह्राद, D12 सत्रोधी (for सह्रादी) —[b]) Ś V1 B2 D1 4 8 12 13 [स]त्रि(D3 [स]व, D12 [स]नि)तर्जन (D6 जित N2 निवर्तन, V2 निगर्जन B1 M3 निमर्दन (for वितर्दन) —[cd]) Ś1 B1 D8 12 युद्ध (for पञ्च) Ś B1 D1 4 8 12 13 [अ]व (for [इ]ते) Ś N1 B1 4 D3 8 12 13 गच्छन्तु (D6 °न्ति) (for निर्यान्ति) B4 [अ]व (for [इ]ति) N1 [अ]वघुष्यता, B1 4 निघोषय, B4 [अ]वलोक्य, D8 [अ]वघोषय, T2 3 [इ]त घोषय, G1 [अ]भिघोषय D4 गच्छन्वेद विमुच्यतां, D6 नियोग प्रवासुषा (for [d]) N2 पच राम गमिष्यामो युद्धायासामिघोषय

23 [a]) Ś B1 D1-4 8 12 13 रणे (for वय) N2 सर्वे (for युद्ध) —[b]) B1 तत्र (for तस्य) B1 धीमत (for यत्नत ) N1 युद्ध दास्यामि यत्नत (sic), B1 दास्यसत्व प्रयत्नत —[c]) Ś N1 B3 4 D1-4 8 12 13 त जयिष्यामहे शत्रु, N2 V B2 3 त च शत्रु (N2 तव शत्रु, B3 शत्रु च त) वधिष्यामि(V °मो), D4 भयद्विषिमहे शत्रु (sic) —[d]) Ś N V B D1-4 8-12 T1 कार्यम् (for कृत्यम्) N2 B3 अस्तु (for अस्ति) Ñ1 B2 3 ते, B1 तु (for न )

24 V3 om 24 —[a]) Ś1 यथा, B3 कथ , D4 जय (for अथ) Ñ V1 B2 3 D7 G2 ते (for न) Ś V2 B1 4 D1-4 8 12 13 शत्रुस्ते, M1 2 न वायै, Cg t as in text (for न शत्रुर्) —[b]) Ñ1 D4 कृतनिश्चया , M3 तव समुद्यता (for कृतसंयुगा ) —[c]) Ñ1 D4 तथा (for तत ) D4 T1 तमपि , M3 तदपि (for समभि ) Ś Ñ1 D1 3 8 12 समभि पत्स्यामो, N1 V1 3 B1 2 4 D4 समभियास्यामो, B3 समव धास्यामो, T3 समभिवत्स्यामो, G (cd) समुपत्स्यामो —G1 om (hapl.?) 24[d]-25[a] —[d]) Ś L2 D1-4 8 12 13 समर्थित, Ñ V3 B1 4 D4 समन्वित, V1 समाहित, D6 T1 समीहित, Cm g k t as in text (for समीक्षितम्) —After 24 Ś D2 8 12 repeat 18[cd]

25 G1 om 25[a] (cf v l 24) —[a]) V3 युद्ध (for युद्धाद्) Ś V1 2 B D2 8 12 13-10 T3 Cr m g t इहैष्यामो, N2 हमेष्यामो, V3 हि दास्यामो, Ck as in text (for इहैष्यामो) —[b]) D4 समुदिता , T2 3 °क्षिता , Cr m g as in text (for समुक्षिता ) —[c]) Ś1 B1 D1 7 8 G2 स्व(B1 ते)तनुं, N V1 2 B2 3 स्वा तनु V3 स्वातनं, Cr m g l t as in text (for स्वतनुं ) N V B2 3 रामनाम (for बाणै) D4 विराधेनाम रामेण —[d]) N1 तापीर (for राम) D1 नामानत (sic) Ś B1 D1 8 12 13 युधि, N V B1 3 D2 3 9-11 T3 G2 M3 M2 3 Cr m g as in text (for शितै ) ※ Cr m g वय बाणै स्वतनु विदार्य रामेण विशसता ताडियता रुधिरेण समुक्षिता रामनामाङ्कितैः शरैः सह युद्धादिहैष्याम इति योजना ※ —After 25 N V B1 3 4 D12 ins B3 ins after 25[ab]

1137* इह तद्वानर सैन्य समुद्रीय त सशय ।

[B4 D12 सुग्रीव च (for सद्वीव) ]

26 [a]) Ś Ñ2 V B D1-4 8 12 13 विद्वो (for भक्षितो) D7 G2 राघवो भक्षितो (by transp ) —[b]) T2 3 वा पुन , Ck t as in text (for वादिन ) —[c]) B2 D2 3 11 तत , Cg as in text (for तव) B3 परिष्वामस् (for

G 6. 43 28
B. 6 64 27
L. 6 43 27

ततोऽवघोषय पुरे गजस्कन्धेन पार्थिव ।
हतो रामः सह भ्रात्रा ससैन्य इति सर्वतः ॥ २७
प्रीतो नाम ततो भूत्वा भृत्यानां त्वमरिंदम ।
भोगांश्च परिवारांश्च कामांश्च वसु दापय ॥ २८
ततो माल्यानि वासांसि वीराणामनुलेपनम् ।
पेयं च बहु योधेभ्यः स्वयं च मुदितः पिब ॥ २९
ततोऽस्मिन्बहुलीभूते कौलीने सर्वतो गते ।
प्रविश्याश्वास्य चापि त्वं सीता रहसि सान्त्वय ।
धनधान्यैश्च कामैश्च रत्नैश्चैनां प्रलोभय ॥ ३०
अनयोपधया राजन्भयशोकानुबन्धया ।
अकामा त्वद्वशं सीता नष्टनाथा गमिष्यति ॥ ३१
रञ्जनीयं हि भर्तारं विनष्टमवगम्य सा ।
नैराश्यात्स्त्रीलघुत्वाच्च त्वद्वशं प्रतिपत्स्यते ॥ ३२
सा पुरा सुखसंवृद्धा सुखार्हा दुःखकर्शिता ।
त्वय्यधीनं सुखं ज्ञात्वा सर्वथोपगमिष्यति ॥ ३३

---

प्रहीष्यामस्) —d) Ñ1 D1 स्व च, G1 स्थिर, Ct as in text (for स्व च) Ñ2 V B2.4 D13 प्रीत्या, T1 G3 M1.2.3 कामान्, Cg k t as in text (for काम) Ś Ñ V B D1.2.3.12.13 परिव्रज (for प्रवृत्य)

27 a) Ś Ñ V B D1.4.8.12.13 ततोऽव(V2 °वि)घुष्य (D2 °घुष्य) नगरे(Ñ1 D4 लङ्कायां) —d) Ś D2.6.12 ससेन (for ससैन्य) Ś इह, V2 B4 D4.8.12 इव (for इति). Ñ V B2.3 D4 दृष्टवान्(Ñ1 °वत्), B4 सर्वश G(ed) दृष्टवत् (for सर्वत)

28 a) G1 तदा (for ततो) Ñ1 V D4 तत प्रीतमना भूत्वा, B1 प्रीत स्वमतो भूत्वा, B2 प्रीतो भूत्वा च भृत्याना —b) D1 सुताना (for भृत्याना) Ñ1 D1 G2 अ(G1 चा)तिसर्दन (for त्वमरिंदम) B2 यथाकाम ददस्व च —After 28ab B1 reads 17cd —c) Ś B1 D8.11 T1 पारिषदांश्च, B3 (ए)वापवारांश्च, D1.3.12 G1 M1.2 परिहारांश्च, D2 [प]रादि दारांश्च, Cr m g k t as in text (for परिवारांश्च) —d) V2.3 B2.4 G1.3 M3 काम M1.2 स्रक्, G(ed) काम्य, Cg as in text (for कामांश्च) Ś Ñ1 D1-3.6-12 T1.2 G2 वसु च (by transp) D4 च बहु Ñ1 V B1-3 D3.12 दापये, B4 दापयन् (for दापय) Ñ2 कामांश्चैव प्रलोभय ※ Cv भोगांश्च परिहारांश्च कामान्वसु च दापयेति पाठ ※

29 Ñ1 transp 29 and 30 —a) D4 धन च (for माल्यानि) —b) Ś Ñ V B1.2.3 D1.2.8.12.13 वराङ्गम्, B3 तवाङ्गम् D7 G2 भूषणानि (for वीराणाम्) D4 वासनाणां च भूषण —c) B1 D8.11 T1 Ct दद Ś D1-3.6.12.13 दत्त्वा (for बहु) D4 योधसु, D6 युधस्य (for योधस्य) Ñ1 दददव बहु भृत्येभ्य, G1 M3 देय च बहुधा तेभ्य —d) B2 पेयं (for स्वयं) Ñ2 V B2.3 पिब (for पिब)

30 Ñ1 transp 29 and 30 —a) G(ed) अथ (for ततो) Ś D2 बहुले भृते, B2 बहुलीकृत्य(G[ed] °कृत) —b) D7 छोऽस्मिन् (for कौलीने) —After 30ab, Ś Ñ V B D S ins.

1138* भक्षित सहृद्दासौ राक्षसैरिति विश्रुत ।

[Ś B1.2 D1-4.8.12.13 समरे, V2 दंतरे (for सहृद्द).]

—e) T2 M3 प्रविश, Cg as in text (for प्रविश्य) Ś D1.8 प्रविश्याश्वस्य D4 मा (for च) Ñ2 V B1.2.4 (ए)व (for [अ]पि) B2 [ए]वं (for त्व) —d) Ś1 B1 D1.2 इति (meta), D13 प्रहसि (sic) (for रहसि) Ś Ñ V B D1-4.8.12.13 पार्थिव, D6.7.9-11 T1.2 सान्त्वयन्, Cg as in text (for सान्त्वय) —e) Ñ2 धनैर् (for धन) Ś D8.12 वरमाल्यैश् (for धनधान्यैश्) Ñ1 D4 भोगैश्, Ñ2 V B1-4 D7 G2 रत्नैश्, M1.2 वस्त्रैश् (for कामैश्) —f) Ñ2 V B1-4 कामैश् (for रत्नैश्) Ś D1.2.8.12.13 [ए]तां, Ñ1 [ए]व (for [ए]नां) D7 G2 कामैरेनां V2 प्रलोभये, T1 प्रलोपय (for प्रलोभय)

31 b) Ś1 B2 D4.10.11 M1.2 Ct t भूय, Cm g as in text (for भय) Ś D1.8.12 [अ]वह(Ś2 [अ]वच, D2 [अ]विह D8.12 [अ]वबु)द्धया, Ñ1 [अ]थवधया, B2 D4 [अ]नुवद्धया, B4 [अ]नुर्चितया (for [अ]नुबन्धया) V B1 D4 भयशोकाय(V2 °ग)निहता(V2 °त्या) —c) Ñ V B2-4 स(D4 म)कामा Ś V2 B1.4 D1-4.12.13 वशगा, V V1.2 B1.2 D6 T1 G2 M3 त्वद्वशं (B2 °शे) (for त्वद्वशं) —d) Ś D1.12 तव नाथ (for नष्टनाथा) Ś Ñ1 V1.2 B1.4 D1-4.8.12.13 भविष्यति

32 V2 om (hapl) 32-33 —a) D6.7.9-11 T1.2 Ct रमणाय G1 जानकी या G2 राज्ञा नून, Cm g k as in text (for रञ्जनीय) —b) Ñ2 V2 D1.8 G1 समधिगम्य B2 D13 समभिगम्य T2 स अमस्य (damaged), Cm as in text (for अव°) —c) Ś D8.12.13 नैराश्यात् D4 वैहाश्यात् (for नैराश्यात्) Ñ2 V1.2 B1-4 D4 लघुभावात् (for लघुत्वात्) —d) B1 -वशा (for -वशं) Ś1 B1 प्रतिपद्यते Ñ2 V1.2 B2-4 प्रतियास्यति, T2 प्रतिकम्प्स्यते

33 V2 om 33 (cf v l 32) —a) B2 यः (for सा) B1 सहुषा D4 सपया (for सहृद्ध) —b) T1 [अ]सुख Cm as in text (for दुःख) Ś Ñ V B1.2 D1-4.8.12.13 T1 -कर्षिता, Cm as in text (for कर्शिता) —c) Ñ2 V1.2 B2.4 D1.2.3 G1.2 M3 Cm त्वद् ; Cg as in text (for त्वयि) Ś D8.12.13 [अ]दृश B1 D1.2 [अ]धुष्यं B4 [अ]धीन ; D13 [अ]धीहं (for [अ]धीनं) T2 मदय

एतत्सुनीतं मम दर्शनेन
रामं हि दृष्ट्वैव भवेदनर्थः ।
इहैव ते सेत्स्यति मोत्सुको भू-
र्महानयुद्धेन सुखस्य लाभः ॥ ३४

अनष्टसैन्यो ह्यनवाप्तसंशयो
रिपूनयुद्धेन जयञ्जनाधिप ।
यशश्च पुण्यं च महन्महीपते
श्रियं च कीर्तिं च चिरं समश्नुते ॥ ३५

G 6 43. 37
B 6 64. 36
L 6 43. 36

इति श्रीरामायणे युद्धकाण्डे द्विपञ्चाशः सर्गः ॥५२॥

Cm as in text (for शा°गा) —ᵈ) Ś D8.12 सर्वेशोपा गमिष्यति, Ñ1 सर्वथा प्रापमिष्यति, B2 V1.2 B सर्वेशोप नयिष्यति, D4 (marg also as in Ñ2) सर्वप्रणमयिष्यति, D8 सर्वदैव भविष्यति, D9-11 सर्वैव नमिष्यति —After 33, G1 erroneously repeats 32ᵃ

34 ᵃ) Ś D8.9.12 हि वचो समास, Ñ1 D4 नय( D4 after corr यदि) दर्शनेन, Ñ2 V B2-4 D2.13 तव दर्शनेन, B1 D6 यद्दर्शनेन (for मम दर्शनेन) —ᵇ) B1 च, D13 तु (for हि) D5 दृष्ट्वैव (sic) D4 अनाथा (sic) (for भवर्ण) —ᶜ) D4 इहैव Ñ1 तत्सेत्स्यति, B1 चोपाश्नति, B4 सेनेक्ष्यति (sic) D4 तवाश्रय (for ते सेत्स्यति) V3 B4 न (for मा) Ñ1 D4 कार्यतत्व (for मोत्सुको भूर्) —ᵈ) Ś ह्ययुद्धेन, V1.2 सु°, B4 अथो तेन, D3.13 हि सुरेन, T1.2 न युद्धेन (for अ°) D6 महोभयुद्धन, D8 महादियुद्धेन (for महानयुद्धन) N2 जयस्य (for सुखस्य)

35 ᵃ) Ś1 Ñ V B D2.8.9.11.13 M2.5 Cm g अदृष्ट B1 दोषो (for सैन्यो) D2 (s)पि (for हि) Ñ1 ससमो (for संशयो) D4 अदृष्टसैन्येषु भवाप्तसभ्रमो. —ᵇ) D9-11 G2 रिपुं, Cm k as in text (for रिपून्) Ś V2 B4 D8.13 च( V2 हि) युद्धेन, D9-11 त्वयुद्धेन, Cg as in text (for अ°) T1 G1 M3 नराधिप, G3 M1.2 जयाधिप (for जनाधिप) Ś Ñ1 B1 D1-3.8.12.13 जयेज्जनाधिप, Ñ2 V B2-4 जयस्व सर्वथा (for जयञ्जनाधिप) —ᶜ) G2 सौख्य (for पुण्य) D6 G2.3 महीपति (for °ते) Ś N V B D2.8.12.13 मही च भूपति (Ñ V B2-4 °ते) D3 मही च भूपते, D4 श्रियश्च कीर्तिं (sic) D7.8.11 T1 G1 M6 महाप्रम(G1 M6 मही म)हीपति, Cg as in text (for महन्महीपते) ❀ Cg महीपते इति सम्बोधनम्, etc. —ᵈ) D7 G2 सदृढ़ा (for च कीर्तिं) T3 transp श्रियं and चिरं D8 समश्नुवे (for °ते) Ñ2 V B2.4 समवाप्नुयात् (for चिरं समश्नुते) D4 समग्रसौख्यं च समाप्नुहि त्वं

Colophon —*Kanda name* Ñ1 B D3.4.13 लङ्काकाण्डे —*Sarga name* Ś Ñ V B D1-4.8.9.12.13 महोदरवाक्य —*Sarga no* (figures words or both) Ś1 Ñ1 V1 B3 D3.4.8.12.13 om Ś2 V1 D2 41 Ñ2 V2 D3 43 B1.2 39 B4 42 D5-7.10.11 T1 G M 61, D1 41, T2 69, T3 71 —After colophon, D3 concludes with राम, G M1.2 श्रीरामाय नमः .

# ५३

G 6. 44. 1
B. 6. 65. 1
L. 6. 44. 1

स तथोक्तस्तु निर्भर्त्स्य कुम्भकर्णो महोदरम् ।
अब्रवीद्राक्षसश्रेष्ठं भ्रातरं रावणं ततः ॥ १
सोऽहं तव भयं घोरं वधात्तस्य दुरात्मनः ।
रामस्याद्य प्रमार्जामि निर्वैरस्त्वं सुखी भव ॥ २
गर्जन्ति न वृथा शूरा निर्जला इव तोयदाः ।
पश्य संपाद्यमानं तु गर्जितं युधि कर्मणा ॥ ३
न मर्षयति चात्मानं संभावयति नात्मना ।
अदर्शयित्वा शूरास्तु कर्म कुर्वन्ति दुष्करम् ॥ ४
विक्लवानामबुद्धीनां राज्ञां पण्डितमानिनाम् ।
शृण्वतां सादितमिदं त्वद्विधानां महोदर ॥ ५
युद्धे कापुरुषैर्नित्यं भवद्भिः प्रियवादिभिः ।
राजानमनुगच्छद्भिः कृत्यमेतद्विनाशितम् ॥ ६

## 53

1 a) Ñ2 तथोक्त स (by transp), V2 स तथा हि, D7 G1 एवमुक्तस्, Cg k t as in text (for स तथोक्तस्). Ś Ñ V B1.2.4 D1-3.5.6.12.13 विनिर्भर्त्स्य (for तु नि°) — Ś Ñ V B D1-3.5.6.12.13 om 1cd — c) G1.3 राक्षस (for राक्षस)

2 Ś Ñ V B D1-3.5.12.13 read 2 ab after 15. — a) Ś Ñ V B D1-3.5.12.13 अहं तेऽद्य, D5 सोऽपि तव (for सोऽहं तव) — c) Ś Ñ2 V1 B1.3 D1.3.6.12.13 रावणवद्, Ñ1 V3 D2 रावणस्य, V2 राक्षसस्य, T1 रामस्यार्थ (sic) (for रामस्याद्य) V2.3 प्रणेष्यामि, B1 प्रवक्ष्यामि, D2 प्रजानामि (for प्रमार्जामि) B2 रावणोपनेष्यामि, B3 राक्षसेश्वर नेष्यामि ※ Cm g प्रमार्जामि प्रमार्जयामि (Cg °जामि निवर्तयिष्यामीत्यर्थः) ※ — d) V3 D8-11 T G3 V2.3 निर्वैरो हि, B1 निर्भर त्व, D6 निर्वैरोऽय, G1 निर्वैरोऽपि (for निर्वैरस्त्वं)

3 For sequence in Ś Ñ V B D1-3.5.12.13 cf v l 2 — a) D5 ते (for न) Ś D2.3 तथा, B1 यथा (for वृथा) — b) Ñ1 सजला (for निर्जला) Ñ2 B2.3 सजला नदन्त इव — V1 om 3c-4b — c) T3 पाप (sic) (for पश्य) Ś1 D6.13 सपाद्यमाना (sic), Ñ2 मर्षयमाना, B1-3 D4.5.9-11 Ct सपद्यमान, Cg as in text (for सपाद्यमान) Ś1 Ñ V1 B2 D1-3.5.12.13 हे, V2 B3.4 मे, L2 D7 ह्य, D8 G1 त, G3 M1 तद्, Cg k t as in text (for तु) — d) G2 निहित, Cg k t as in text (for गर्जित)

4 For sequence in Ś Ñ V B D1-3.5.12.13 cf v l 2 V1 om 4ab (cf v l 3) — a) D8-11 M1.2 Ck t मर्षयन्ति — b) D5 समावयति D5.6 T1.2 G M3 च (for न) D8.10.11 M1.2 Ck t समावयितुमात्मना — For 4ab, Ś D1 D1-3.5.12.13 subst

1139* नात्मानं ख्यापयन्ते ये ते न संभावयन्युत ।

[D12 नयति (for [ख्या]पय°) D8 न ते (by transp) D3 [ख्या]पेयन्ते ये ते (sic) (for [ख्या]पयन्ते ये ते न) D6 अदर्शयित्वा ते वै कर्म संपादयन्त्युत ].

while, Ñ V1.2 B2-4 subst

1140* नात्मानं पर्याति यो निश्चयवाक्य स भाषते ।

[B1 मर्षयति, B3 [अ]भ्यसति B3 ये (for यो) V2.3 प्रभाषते, B2 न भाषते.]

※ Ct न मर्षयन्तीति। शूरा परकृतं स्तुतिं न मर्षयन्ति न सहन्ते। आत्मनात्मानं न संभावयन्ति न श्लाघन्ते। उभयत्रापि स्पष्टत्वैकवचनम्।, So also Cm g ※ — cd) Ś D1-3.5.12.13 असर्पयित्वा, B1 असंभाव्य (for अदर्शयित्वा) Ñ V B2.4 D1 अकृत्वा हि (Ñ1 अप्रयास्तु, V1 अदर्शयित्वा [hypm], V2 असंस्तुत्य, V3 अनूदयित्वा B1 अस्तुत्वा हि, D4 अस्तुत्वा च) रणे शूरा (for c) Ñ1 D2 दारुण (for दुष्करम्) V2 कुर्वन्ति रणे कर्म (for d) G2 अकथयमान शूरस्तु कुरुते कर्म दुष्करं

5 For sequence in Ś Ñ V B D1-3.5.12.13 cf v l 2 — a) B1 (marg also as in text) विक्लवा-नाम्, B4 विदेहानाम् B3 D8-11 अबुद्धीनां — b) D1 राजा (sic) D8 M3 Cm g राज्ञा, Ck t as in text (for राज्ञां) — c) Ñ2 V2 B1 D6 शृण्वता, B1 शृणु त्वं Ś V3 D6.11 साहतं (V3 °तम्) Ñ V1.3 B शोभनम् (for सादितं) D8.9.10 T G1.3 M1.2 Cr m g शृण्वता (D8 T G1.3 M1 Cr °ता) सादितमिदं, D9 शृण्वता व्योढुमिदं (sic), D7.10.11 G2 M1.3 रोचत त्वद्वचो मि ध्य (M3 नून), D7.10.11 G2 M1.3 कथ्यमानं, Cr m as in text (for त्वद्विधानां) ※ Cv रोचते त्वद्वचो मिथ्या कथ्यमानं महोदरेति क्वचिदस्य पद्यस्य पाठः।, Ct °शृण्वता सादितमिदं त्वद्विधानाम्° इति पाठे विक्लवानामबुद्धीनां त्वद्विधानां वचः शृण्वतां इदं सादितम्। ईदृश दुःखं प्राप्तमित्यर्थः इति ※

6 For sequence in Ś Ñ V B D1-3.5.12.13 cf v l 2 — a) Ñ1 V3 B1.3 युद्ध — c) D1 राजपदम् (sic) (for राजानम्) Ś Ñ V B D1-3.5.12.13 -गच्छद्भि (for गच्छद्भिः) — d) V3 V B2-4 कृतम् (for कृत्यम्) G1 एव, Ck t as in text (for एतद्), D8.10 Ck t सर्वं कृत्यं (for कृत्यमेतद्) V3 विपर्यस्तं B1 विनाशितं, D8 T1 M3 Cm g हि नाशितं T3 हि नाशितं, G1 विनाशितं (for विनाशितम्) D9 कृत्यमेवोपनाशितं (corrupt).

G 6 41. 2
B 6 65. 19
L 6 41. 3

इन्द्राशनिसमं भीमं वज्रप्रतिमगौरवम् ।
देवदानवगन्धर्वयक्षकिंनरसूदनम् ॥ १३
रक्तमाल्यमहादाम स्वतश्चोद्गतपावकम् ।
आदाय निशितं शूलं शत्रुशोणितरञ्जितम् ।
कुम्भकर्णो महातेजा रावणं वाक्यमब्रवीत् ॥ १४
गमिष्याम्यहमेकाकी तिष्ठत्विह बलं महत् ।
अद्य तान्क्षुधितः क्रुद्धो भक्षयिष्यामि वानरान् ॥ १५
कुम्भकर्णवचः श्रुत्वा रावणो वाक्यमब्रवीत् ।
सैन्यैः परिवृतो गच्छ शूलमुद्गरपाणिभिः ॥ १६
वानरा हि महात्मानः शीघ्राश्च व्यवसायिनः ।
एकाकिनं प्रमत्तं वा नयेयुर्दशनैः क्षयम् ॥ १७
तस्मात्परमदुर्धर्षैः सैन्यैः परिवृतो व्रज ।
रक्षसामहितं सर्वं शत्रुपक्षं निषूदय ॥ १८
अथासनात्समुत्पत्य स्रजं मणिकृतान्तराम् ।
आबबन्ध महातेजाः कुम्भकर्णस्य रावणः ॥ १९
अङ्गदानङ्गुलीवेष्टान्वराण्याभरणानि च ।
हारं च शशिसंकाशमाबबन्ध महात्मनः ॥ २०

---

(for निवहण) Ś D8.11 शत्रुशोणितरञ्जित —°) N2 V B D8.10–13 T1.2 M1.2 सर्वं (for सव) D1 सर्वकाञ्चायस (for सर्वेकाञ्चायस) —ᵈ) B3 सन्निभ G2 M3 भूषित (for भूषणम्) Ñ2 B1 कालांतकयमोपम

13 ᵃ) Ś Ñ1 V2 B1 D1–4.8.12.13 घोरं, M3 तेजो (for भीमं). D7.9–11 समप्रख्य (for सम भीम) —ᵇ) G3 सस्पर्श (for प्रतिम) N1 D5 (before corr) दारुणं B3 D10 गोचर (for -गौरवम्) —ᶜ) Ś Ñ2 V B D1–4.6.12.13 -दर्पघ्न (for गन्धर्व) —ᵈ) Ś N2 B2–4 D1–4.9.12.13 -नाशन, V D9–11 G1 पवन ; B1 D6 -राक्षस (for किंनर) Ñ1 दर्पघ्नमरिसूदनं

14 ᵃ) M1.2 वक्ष (for रक्त) M3 -माल्य Ś Ñ V B D1–4.8.12.13 [अं]बरधरं. D10.12 M1.2.3 Cr t महादामा T2 महादाम G1 M3 महद्दा(M3 °द्दा)म (for महादाम) D6 Cm g रक्तमाल्यं म(Cm °ल्यम)हाधाम —ᵇ) Ś D8.12 स्फिक्सरोद्र(D8 °द्रो)त, N V B D13 शिरस्युद्ध(D13 °द्ध)त, D1.2 स्वरस्म्युद्धृत D6 स्वरम्युद्धृत ; D4 शिरस्युद्धृत, D6 स्फुरदक्षम (sic) T3 *** द्गत (damaged) (for स्वतश्चोद्गत) —ᶜ) V3 D6.7.9–11 T1.2 G2.3 M1.2.3 विपुल (for निशित) —ᵈ) B1 -रञ्जन (for -रञ्जितम्) —D3.5 om (hapl) 14ᶠ–16ᵃ

15 D3.5 om 15 (cf v l 14) —ᵃ) Ś Ñ V B1–3 D1–3.8.12.13 एवैकस्; B4 एकैवा D5 एकैकस् (for एकाकी) —ᵇ) N1 [ए]वद् (for [इ]ह) Ś N V B D1–4.8.12.13 तव, T1 M3 मम (for महत्) —ᶜ) D3 अथ (for अद्य) T1 M2 क्षुधितान्, M3 क्षिप्त (for क्षुधित) Ś D1–3.8.12.13 कोपाद्; Ñ1 V B D5 सर्वान् (for क्रुद्धो) N2 भयैवाहं तु तान्सर्वान् —ᵈ) G2 हर्षयिष्यामि (sic) (for भक्षयिष्यामि) —After 15 Ś Ñ V B D1–4.8.12.13 read 2–11.

16 D3.5 om 16ᵃ (cf. v l 14) Ś Ñ V B D1–4.8.12.13 om 16ᶜᵈ. —ᶜ) Ś2 D7.9.11 बले (for सैन्यैः) Ś B1.4 D1–3.8.12 भ्रात ; N2 V B2.3 वीरः D13 भ्रातृ ; T2 damaged (for गच्छ) —ᵈ) Ś Ñ2 B1 D1–4.8.12.13 कर्तव्यं वचनं च मे (B1 D2.4.13 मम) N2 V B2–4 कर्तव्यं च वचो मम —After 16, Ś N V B2–4 D1–4.8.12.13 ins

1142* असहायस्य गमनं मम बुद्ध्या न रोचते।

[D8 सम (for मम)]

17 ᵃ) Ñ2 V B2.4 D5 च (for हि) D4 दुरा मन (for महात्मान) —ᵇ) D6.7 T1 शीघ्रा स्युर्, D6 T2 G1.3 M3 शीघ्रा सु, D9–11 T3 शूरा सु, G2 M2 शीघ्रं सु (for शीघ्राश्च) Ś1 स्यवसायका, V2 -व्यवसायिना N1 B3 D1 शूरा शीघ्रपराक्रमा —ᶜ) B3 reads from मत्त up to सशय (see var) in ᵈ in marg Ś Ñ V B1.2.4 D1–4.8.12.13 च, D7 G3 त्वां (for वा) B3 (also) प्रपन्नत्व (for प्रमत्त वा) —ᵈ) Ś Ñ V1.2 B4 D1–4.8.12.13 शमयेयुर्हि संशय, V3 B3(m) शमयेयुर्न संशय, B1 शमयेयुरसंशयं, B2 शमयेयुर्हि संशये, B3 (orig) गणयेयुर्न संशय

18 ᵃ) Ś D8.12 त्वं राम, D4 समर (for परम) Ś1 Ñ1 V B1–3 D1–4.7–11 दुर्धर्ष (Ś2 D8.11 °र्षं, V3 B1–3 D1–3.4.13 °र्षे) —ᶜ) V1 B3 D2 राक्षसै ; B1 D5 रक्षसा Ñ1 B2.3 D4.5 सहित (N1 °त ; B2 D4 °तै) (for महितं) Ñ1 D4 सर्वं (for सर्वं) Ś D1–3.8.12.13 सहित राक्षसानां त्व(D3 हि). B1 जहि त्व राक्षसैः सार्धं, D7 G2 रक्षत्र रक्षसां पक्ष —ᵈ) Ś1 Ñ2 V B1–3 D1–3.8.12.13 S निषूदय B4 D5 शत्रुपक्षनिषू(D5 °सू)दन

19 D4 reads 19 (except अथा) in marg —ᵃ) G2 समुत्थाय (for समुत्पत्य) —ᵇ) Ś Ñ V B D1–4.8.12.13 माणं सूर्यसमप्रभं —ᵈ) Ś D3.8.10 मस्तके (for रावण)

20 ᵃ) Ñ D1.3.4.7.9–11.13 T1.2 G M अंगदानि (for अङ्गदान्) Ñ2 D10 -वेष्टान् ; Cg k t as in text (for वेष्टान्) Ś D8.12 अंगदान्यंगुलीयानि ; V1.2 B2.4 अंगदे चास्य सुशुभे (B1 सुशुभेः B2 शुभदे) V3 अंगदे सुशुभे चास्य। B1 अंगदे सुशुभातेस्य। D1 अंगदान्यंगुलिवेष्टं च —ᵇ) Ś Ñ V B D1–4.8.12.13 कवचं च महाधनं (V2 B3 °नुं) —ᵈ) Ś Ñ1 V B1.2.4 D1–4.8.12.13 स बबंध D7 G2 आमुमोच

दिव्यानि च सुगन्धीनि माल्यदामानि रावणः ।
श्रोत्रे चासञ्जयामास श्रीमती चास्य कुण्डले ॥ २१
काञ्चनाङ्गदकेयूरो निष्काभरणभूषितः ।
कुम्भकर्णो बृहत्कर्णः सुहुतोऽग्निरिवाबभौ ॥ २२
श्रोणीसूत्रेण महता मेचकेन विराजितः ।
अमृतोत्पादने नद्धो भुजंगेनेव मन्दरः ॥ २३
स काञ्चनं भारसहं निवातं
विद्युत्प्रभं दीप्तमिवात्मभासा ।
आबध्यमानः कवचं रराज
संध्याभ्रसंवीत इवाद्रिराजः ॥ २४
सर्वाभरणनद्धाङ्गः शूलपाणिः स राक्षसः ।
त्रिविक्रमकृतोत्साहो नारायण इवाबभौ ॥ २५
भ्रातरं संपरिष्वज्य कृत्वा चापि प्रदक्षिणम् ।
प्रणम्य शिरसा तस्मै संप्रतस्थे महाबलः ।
तमाशीर्भिः प्रशस्ताभिः प्रेषयामास रावणः ॥ २६

G. 6. 44. 29
B. 6. 65. 33
L. 6. 44. 31

---

Cg as in text (for आबबन्ध). Ñ1 D4 दुरासदः(D4 °दं); V3 महामनाः (for महात्मन°).

21 a) Ñ V B2-4 D4 गंधमाल्यानि; D8.12 च सुगंधानि (for च सुगन्धीनि). Ś D8.12 दिव्यं सुगंधं माल्यं च; B1 D3 दिव्यान्गंधांश्च माल्यांश्च(D3 °ल्यं च), D1.3.13 दिव्यांश्च गंधान्मा(D3 °धमा)ल्यांश्च. — b) G3 -जालानि (for -दामानि). Ś Ñ V B1.3.4 D1-4.6.12.13 रत्नानि विविधानि च; B4 रत्नान्याभरणानि च. — c) Ś Ñ V1.3 B D1-4.7-13 T3 G3 M1.2.5 गात्रेषु; G1 अंगेषु; Cr.g as in text (for श्रोत्रे च). Ś Ñ V B1.3.4 D1-4.6.12.13 योजयामास; B2 D7.9-11 सज्जयामास; G1 [आ]सर्जयामास; G2.3 M1.2.5 [आ]सज्ज°; Cg as in text (for [आ]सञ्जयामास). ☸ Cr.m: श्रोत्रे श्रोत्रयोः. ☸ — d) D7 G1 कर्णयोश्च; D10.11 श्रोत्रयोश्च (for श्रीमती). Ś Ñ V B D1-4.6.12.13 कुंडले च महाभुजः (Ñ V B D4 °धने).

22 a) G1 -[अ]ङ्गुद- (for -[अ]ङ्गद-). Ñ V B D1.4.7.9-11 T2.3 G1 M1 -केयूर-; G1 -दीप्तांगो (for -केयूरो). — b) Ś Ñ V B1.3.4 D1-3.6.12.13 -निष्कप्रवर-; D4 -निष्कैः परम-; D4 -पुष्पप्रवर- (for निष्काभरण-). Ś Ñ1 B1 D2-4.6.12.13 -भूषणः (for -भूषितः). — c) Ś V1 B1 D1-3.6.12.13 महाबाहुर्; Ñ1 V1.3 B2-4 महाकर्णः (for बृहत्कर्णः). — d) Ś B1 D1.2.6.12.13 हु(B1 ग)तोनक; Ñ1 D3.4 हुताशन; V1 illeg.; V3 B2.4 स हुतोऽग्निर्; G(ed.) सस्कृतोऽग्निर् (for सुहुतोऽग्निर्).

23 a) Ñ V B2.3 D4 रश्मि- (for श्रोणी-). Ñ1 सुवर्णेन; D4 बृहता (for महता). — b) Ś Ñ2 V2.3 B D1-4.6.8.12.13 T2.3 कांचनेन (for मेचकेन). Ñ1 V B D1-7.9-12.13 T G1 विराजता; M3 व्यराजत (for विराजितः). Ñ1 शुचिनातीव भास्वता. — c) Ñ1 B1 D4.12 बद्धो (for नद्धो). D2 T2 G1 M1 अमृतोत्पादनखेन. ☸ Cg: अमृतोत्पादने नद्ध इति निमित्तसप्तमी. ☸ — d) D1.2-4.6.12 T1.2 G3 भुजगेन; Cg as in text (for भुजंगेन). Ś1 Ñ1 D4 [प]व (for [इ]व). D4 चेतनः.

24 a) T1 भार** (damaged) (for भारसहं). Ś D1.3.6.12 विमानं; Ñ2 V B4 विचित्रं; B1 D4.12 विशालं (for निवातं). Ñ1 B2.3 D4 M3 भास्करसन्निकाशं; D4 भारसहस्रभारं; D7.9 T2 G2.3 भारसहप्रनिर्मि(G3 °समि)तं (for भारसहं निवातं). — b) M3 -प्रदीप्तं तम् (for -प्रभं दीप्तम्). B1 D4.12 [अ]त्रभासा; D12 °सं) (for [आ]त्मभासा). — c) Ś V3 B4 D4.6.11.13 आबध्यमानं; V1 आबध्य देहे; D1.13 आबध्य वीरः. Ś D8.12 वसानः; Ñ V B D1-4.13 बभासे; D4 निवातं (for रराज). ☸ Cv: आबध्यमानः आबध्नान:(°ध्नन्?)। मार्पयत्वाद्विकरणि(°ण?)व्यत्ययेन श्यन्।। so also Cr.m g.t. ☸ — d) B4 -[अ]र्क- (for -[अ]भ्र-). D4 -संपीत (for -संवीत). T2.3 [अ]ग- (for [अ]द्रि-). —After 24, D3 ins. an addl. colophon:

[*Sarga name*: कुंभकर्णनिर्याण. —*Sarga no.* (figures, words or both): 44]

25 a) Ś D1.3.6.12 -शुभांगः; Ñ1 -सर्वांगः; Ñ2 V B2-4 -चित्रांगः; B1 पूर्णांगः; D1 -सुभांगः; D4 -युक्तांगः; D7.10.11 G2.3 M3 Cm.g.t -सर्वांगः; D13 -सज्जः; G1 M5 -सवीतः; Ctp as in text (for नद्धाङ्गः). — c) Ś V B1 D1-3.6.12.13 त्रिविक्रमः; Ñ B2.3 D4 विक्रमिष्यन्; B1 विक्रमे तु (for त्रिविक्रम-). — d) B1 शूलपाणिर् (for नारायण). —After 25, D12 ins. an addl. colophon:

[*Kāṇḍa name*: युद्धकांडे. —*Sarga name*: कुंभकर्णप्रस्थानं.]

26 a) Ś Ñ V B D1-3.6.12.13 स रावणं (for भ्रातरं स-). — b) Ś Ñ1 D3.6.12 T M1.3 चापि-; D4 lacuna (for चापि). — c) Ñ1 D4 प्रणामं (for प्रणम्य). Ś B1.4 D1-3.6.12 चैव(D3 °वं); Ñ2 D4 कृत्वा; Ñ1 चापि; V B2.3 चासौ; D12 चापि (for तस्मै). — d) B4 T1 स प्रतस्थे; D4.7.9-11 G1 प्रतस्थे स (for संप्रतस्थे). B4 महायशाः. —After 26ab, Ś Ñ V B D1-4.6.12.13 ins.:

1143* तस्य सूतो रथं दिव्यं पवनस्यसमाजवः।
युक्तं खरसहस्रेण युद्धध्वजविभूषितम्।
महाचक्रनिर्घोषं कैलासशिखरोपमम्।
अष्टचक्रं महावेगमुपनीय महारथम्।

रक्ताक्षाः सुमहाकाया नीलाञ्जनचयोपमाः ।
शूलानुद्यम्य खड्गांश्च निशितांश्च परश्वधान् ॥ ३१
बहुव्यामांश्च परिघान्गदाश्च मुसलानि च ।
तालस्कन्धांश्च विपुलान्क्षेपणीयान्दुरासदान् ॥ ३२
अथान्यद्वपुरादाय दारुणं लोमहर्षणम् ।
निष्पपात महातेजाः कुम्भकर्णो महाबलः ॥ ३३
धनुःशतपरीणाहः स षट्शतसमुच्छ्रितः ।
रौद्रः शकटचक्राक्षो महापर्वतसंनिभः ॥ ३४
संनिपत्य च रक्षांसि दग्धशैलोपमो महान् ।
कुम्भकर्णो महावक्त्रः प्रहसन्निदमब्रवीत् ॥ ३५
अद्य वानरमुख्यानां तानि यूथानि भागशः ।
निर्दहिष्यामि संक्रुद्धः शलभानिव पावकः ॥ ३६
नापराध्यन्ति मे कामं वानरा वनचारिणः ।
जातिरस्मद्विधानां सा पुरोद्यानविभूषणम् ॥ ३७
पुररोधस्य मूलं तु राघवः सहलक्ष्मणः ।
हते तस्मिन्हतं सर्वं तं वधिष्यामि संयुगे ॥ ३८

G 6 44-40
B. 6 65 45
L. 6 44 43

D4 T2 3 G3 भीम (for भीमा) —d) Ś N V1 2 B D1 4 5 10 11 12 भीमाक्ष, D2 भीमाख्या, D6 राक्षसा (for भीमाक्षा)

31 V3 om 31a (cf v l 30) —a) Ś2 B1 D1-4 7 8 10 12 G2 3 M1 2 3 राक्षसा, V1 2 रक्ताक्ष (for रक्ताक्षा) Ś D2 4 6 8 12 13 च B2 तु, D13 तु (for सु) D10 11 Ck t बहुव्यामा (for महाकाया) —b) V2 3 प्रभा (for न्(च)यमा) —V3 om 31cd —c) Ś1 B2 D13 शूलानि, V3 D6 शूलम् (for शूलान्) V3 खड्गाश्च —d) Ś V2 B1 D1-3 6 8 10 11 12 विविधांश्च, B2 पट्टिशान् (for निशितांश्च) B3 स (for च)

32 a) Ś Ñ V1 3 D12 बहुव्यामांश्च, D1 3 T1 बाहुव्यामांश्च, D6 12 T3 निबि(D6 °द्रि)पालांश्च, D13 बह्वायामांश्च, (sic) Cr m g as in text (for बहुव्यामांश्च) —b) Ś D1 मुसुलानि, N1 V3 B1 D1 10 11 12 मुसलानि (for मुसलानि) —B1 reads 32cd in marg —c) Ś B1 D1 3 12 ताल-, N1 V3 B1 D2-4 13 शाल (for ताल) Ś N1 B1 4 D1-3 5 12 13 G3 विविधान् (for विपुलान्) —d) Ś N V B D1-4 6 10 12 शतघ्नीश्च (for क्षेपणीयान्) Ś N V1 2 B2-4 D1-4 6 10 12 M1 2 दुरासदा, V3 परश्वधान्

—After 32, Ś N1 B1 3 D1-4 6 10 12 13 ins

1145* स पुरद्वारमासाद्य राक्षसो घोरदर्शनः ।

[B1 (?) (for स) N1 B3 आगम्य (for आसाद्य) D3 भीम (for घोर) Ñ1 दारुणो लोमहर्षण (for the post half)]

—Thereafter B3 cont

1146* रौद्रश्चिक्रतशतघ्नीश्च पट्टिशांस्तिमुसुण्डय ।

33 Ś N1 B1 D1-4 6 12 13 om 33ab —a) B3 अथान्यद् (for अथान्यद्) B1 D6 धनुर् (for वपुर्) N2 B3 M1 2 आलम्ब्य (for आदाय) —b) N V B2-4 D2 3 10 11 घोर दर्शनः D6 T1 G1 M2 3 लोमहर्षणम् (for लोमहर्षणम्) —d) Ś N V B2-4 D1-4 6 10 12 प्रतापवान्, B1 दुरासद (for महाबल)

34 b) Ś D1 षड्यामशतमुच्छ्रित, Ñ1 D4 शतव्याम समोच्छ्रि(Ñ1 °च्छ्रि)त, N2 V1 B1 3 4 D1 3 10 12 षड्व्यामशतमुच्छ्रित, V1 2 B3 षड्व्यामशतोच्छ्रित (subm), D1 षड्व्यामशतमुच्छ्रित, G1 षड्व्यामशत च समुच्छ्रित ॐ Cv धनुःशतपरीणाहः स षड्व्यामशतमुच्छ्रित इति पाठः ॐ —c) M1 2 वृत्ताक्षो (for चक्राक्षो) —d) Ś N1 B1 D1 6 8 12 13 गिरिकूटो(Ś D8 12 °शृङ्गो)पमो महान्(Ñ1 D4 यथा) V3 स तु राक्षससत्तम

35 V3 om 35ab —a) Ś1 D6 12 M1 Ck सन्निपात्य N1 B2 3(marg also as in text) D5-8 T स (N1 B2 3 D5 6 T1 3 स) निपात्य, Cg t as in text (for संनिपत्य) Ś2 N1 V3 B2 3 D1 2 4 12 13 स (for च) B1 स च निष्पत्य (for संनिपत्य च) —b) Ś B1 4 D1-3 12 13 बली, D6 [S]चल (for महान्) N2 B1 3 तु वै दग्धे पर्वतैः (B1 °र्वै) —c) Ñ1 V B1 (marg also as in text) बाहु, D1 11 -वक्त्र (for -वक्त्र) —d) Ś N V B D1-4 8 12 13 G2 वाक्यम् (for इदम्)

36 a) Ś D6 11 नृप, T3 अन्य, Cg as in text (for अद्य) B1 मुख्याश्च (for मुख्यानां) —b) B2 तास्तु D7 महा, G3 नाना (for तानि) N1 V1 2 B2-4 [स]नीकानि (for यूथानि) —c) B2 निर्दहिष्यामि, D1 12 निर्दधि ष्यामि V3 सुसंक्रुद्ध (typo) (for संक्रुद्ध) N1 V1 2 B3 निर्दहिष्यामि स्वय(V2 B2 सुसं; V3 च स) क्रुद्ध —d) D6 11 पतगान् (for शलभान्) —After 36 Ś B1 4 D1-4 8 12 13 ins, B2 ins (marg) after 36ab

1147* सर्वं राक्षसहास्यार्थं च चान्ये मम शासन ।

37 V3 om 37ab —a) B1 वा (for मे) —c) Ś N1 D1 6 12 13 एतद्, N1 V2 3 B2-4 D7 एवं (for अस्मद्) N2 V3 B2-4 तु, G1 च G2 हि G3 वा (for सा) —d) Ś1 D6 13 विभूषणं N1 V3 B2 3 विभी(N1 B2 °भू)षणा(B3 °णा) N2 विभूषिणी V1 विभूषणा B3 (marg also as in V2) विभूषिता (for विभूषणम्)

38 a) N1 V B2 4 पुरोधस्य, D1 पुररोधस्य D3 13 T1 पुरं रोधस्य, T3 damaged, Cm k t as in text (for पुररोधस्य) G2 हि (for तु) B2 विशेषमूलं तु रामो —c) N1 तत् हवान्, D1 तदा सवान् (for हत सर्वं) —d) Ś B1 D1 6 8 12 13 तं हनिष्यामि V1 वधिष्यामि च

स लङ्घयित्वा प्राकारं पद्भ्यां पर्वतसंनिभः ।
ददर्शाभ्रघनप्रख्यं वानरानीकमद्भुतम् ॥ ४६
ते दृष्ट्वा राक्षसश्रेष्ठं वानराः पर्वतोपमम् ।
वायुनुन्ना इव घना ययुः सर्वा दिशस्तदा ॥ ४७
तद्वानरानीकमतिप्रचण्डं
दिशो द्रवद्भिन्नमिवाभ्रजालम् ।
स कुम्भकर्णः समवेक्ष्य हर्षा-
न्ननाद भूयो घनवद्घनाभः ॥ ४८
ते तस्य घोरं निनदं निशम्य
यथा निनादं दिवि वारिदस्य ।
पेतुर्धरण्यां बहवः प्लवंगा
निकृत्तमूला इव सालवृक्षाः ॥ ४९

G 6 41 a
B. 6 65 56
L 6 44 a

एव यदन्ययो योद्धु —ᵈ) D1 9-11 वश (for -बल) Ś D1-8 10,11 मोहित, Ñ2 V B D4 मोहित

46 ᵃ) Ś Ñ V B D1-4 8 12 13 स निष्क्रम्य (B1 °शैल्य) पुरद्वाराद् (Ñ2 V B2 3 °र) —ᵇ) Ñ2 V B3 4 सुदृढ (for पद्भ्यां). B4 -संनिभं Ś N1 B1 4 D1-4 8 12 13 कुम्भकर्णो महाबल. —After 46ᵃᵇ, V3 D4 ins, while N V1 2 D13 ins after 46

1151* वानरान्वीक्ष्य संहृष्टो ननर्द विकृतस्वनम् ।

[V3 संदृश्यन् (for संहृष्टो) D13 ननाद (for ननर्द) V3 D4 विकृत (for विकृत) V1 स्वर D13 स्वर ]

—D4 om 46ᶜᵈ —ᶜ) Ś D1 8 12 ददर्शाभ्र, D6 T1 दद् र्शाभ्रे (for ददर्शाभ्र) T2 नभ (meta) Cr m g as in text (for घन)

47 Ś D4 8,11 repeat 47 (D4 47ᵃᵇ only) and read 48 (except D4) after 6 54 2 Ñ1 reads 47-48ᵇ and repeats 48ᵃ-49 after 6 54 2 B1 2 repeat 47 49 after 6 54 2 D1-3 13 repeat 47 and read 48-49 after 6 54 2 —ᵃ) Ś B1 D1-4 7 8,11 12 G1 (Ś D4,8 12 13 both times B1 D1 3 4 first time) त (for ते). B4 दृष्ट्वा तद् (for ते दृष्ट्वा) Ś B1 4 D1-4 7 8 12 13 T1 2 (Ś1 B1 D1-3 6 12 13 both times, Ś1 second time) वानर (D1 [first time] °रा) श्रेष्ठ, B2 (second time) राक्षस वीरो, D4 (first time) वानरा सर्वे (for राक्षसश्रेष्ठं) —ᵇ) Ś B1 4 D1-4 8 12 13 (Ś1 B1 D1-3 6 12 13 both times, Ś1 second time D4 first time) राक्षसं (for वानरा) Ñ1 B2 D6 (second time) T2 3 M3 पर्वतोपमा G1 समवेक्ष्य वानरा —ᶜ) Ś Ñ1 B1 2 D1 4,6 8 12 (all except Ñ1 D4 second time) वायुधिता, B1 (first time) वायुपूर्णा (for वायुनुन्ना) Ś N1 B1 2 4 D1-4,8,12,13 (Ś B1 D1-3 6,12,13 both times, B2 second time) यथा मेघा (for इव घना) —ᵈ) Ś B1 4 D1-4,8,12,13 (Ś B1 D1 4 6,12 first time, D1 13 both times) जग्मु (for ययु) Ś B1 D4 (all first time) सर्व (for सर्वा) G1 transp ययु and दिशस्. Ñ1 D4 6 G1 दिशो दश V1 2 B1 3 4 D8 11 (B1 D1 12 both times, B2 second time) दिशस्तथा (for दिशस्तदा)

48 For sequence in Ś Ñ2 B1 2 D1-3 8 12 13, cf v l 47 —ᵃ) G1 damaged for तद्वानरानी D4 यद् (for तद्) —ᵇ) B1 (first time) 2 द्रुत (for द्रवद्) V3 B4 [अ]द्रि (for [अ]भ्र) —ᶜ) Ś B2 3 (both times) D6 प्रसमीक्ष्य, N2 सुसमीक्ष्य (for समवेक्ष्य) D9-11 हर्षं (for हर्षान्) —ᵈ) Ś D4 भीम Ñ V1 2 B D1-4 13 (Ñ1 second time, B1 both times B2 first time) नाद, B2 (second time) वीर्ये (for भूयो) Ñ2 V3 B1-3 (B1 2 first time) घनसंनिकाश, D4 सघन घनाभ, T1 [s]पि घनद्घनाभ (sic) (for घनवद्घनाभ)

49 For sequence in Ñ1 B1 2 D1-3 13, cf v l 47 Ś D4 8 11 om 49 Ñ1 illeg for 49ᵃᵇ in first occurrence G1 damaged from नर्द in ᵃ up to निनाद in ᵇ —ᵃ) Ñ1 D4 11 तत सु 2 B1 2 (both second time) D1 2 ततस्तु, D7 तदोस्य (for ते तस्य) B2 (second time) विनद N2 V B (B1 2 first time) त तस्य (B1 ततस्तु) नादं तुमुल निशम्य, D3 ते तस्य घोरं च निशम्य शब्द —ᵇ) M3 [अ]तिनादं (for निनादं) —B2 om from वारिदस्य up to 50ᵇ B2 (second time) D1-3 13 यथा वार्नि (D1 °इप) शादवर्षे (B1 °द्वेति, D1 °सप)मुक्त (B1 °मुक्त) B2 (second time) यथाशनिर्भिन्नवृक्षमुन्न —Ñ1 reads 49ᶜᵈ in marg in first occurrence —ᶜ) D3 धरित्र्यां, D6 T2 3 पृथिव्यां (for धरण्यां) Ñ1 (first time illeg) B1 (first time) 4 D1 4 T1 G1 प्लवगा, B2 (second time) पतंगा (for प्लवंगा) D1 G1 transp धरण्यां and प्लवगा —ᵈ) N1 (first time) D2 7 11 निकृत (for निकृत्त) Ñ V B1 3 4 D4 5 6 8-11 13 (Ñ1 B1 2 both times) शाल (for साल) —After 49, Ñ1 (m) 2 V B3 4 (Ñ1 B1 after 49 first occurrence) ins.

1152* दृष्ट्वेति तु समावस्य संगम्य च परस्परम् ।
वृक्षानिर्देशा इव समाय मयद्ग्स्थिरे ।

[(l 1) B4 समावस (for समावस्य). —B1 om l 2 ]

G 6 44 0
B 6 65 37
L 6 44 53

विपुलपरिघवान्स कुम्भकर्णो
रिपुनिधनाय विनिःसृतो महात्मा ।
कपिगणभयमाददत्सुभीमं
प्रभुरिव किंकरदण्डवान्युगान्ते ॥ ५०

इति श्रीरामायणे युद्धकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

## ५४

स ननाद महानादं समुद्रमभिनादयन् ।
जनयन्निव निर्घातान्विधमन्निव पर्वतान् ॥ १
तमवध्यं मघवता यमेन वरुणेन च ।
प्रेक्ष्य भीमाक्षमायान्तं वानरा विप्रदुद्रुवुः ॥ २
तांस्तु विद्रवतो दृष्ट्वा वालिपुत्रोऽङ्गदोऽब्रवीत् ।
नलं नीलं गवाक्षं च कुमुदं च महाबलम् ॥ ३

50 B2 om 50cd (cf v l 49) B4 om 50 —a) N1 परिघस्तु Ś Ñ1 V2 3 B1 D1 3 8 12 13 तु (for स) D4 विपुलपरिघबाणहस्तो —b) B2 गणवध , D4 विनयाय (for निधनाय) B3 निश्चयो, D4 5 9–11 T G1 3 M3 विनिसृतो, D7 G2 विनिर्गतो, Ct as in text (for विनि सृतो) Ś Ñ1 B2 D1–4 6 12 13 महौजा (for महा मा) —c) D6 -बलम्, D5 क्षयम् (for भयम्) Ś1 D8 12 क्षाचरन् ; Ñ1 V3 D2 3 4 7 T2 3 G3 M1 2 3 भाद्रधत् , B1 आद्दव D13 आवद्दद D4 आद्य*, D6 भारधत् (s c) (for भाददत्) Ś Ñ V B1–3 D1–4 6 12 13 -वीर्य D7 G1 2 भीम (for भीम) —d) D1 विभुर् (for प्रभुर्) N V B2 3 D4 कृतात (for युगान्ते) Ś D8 12 किंकरवानु गातवाव

Colophon —*Kanda name* N1 V1 B D2 4 13 लङ्काकाण्डे —*Sarga name* Ś N1 V B D1–4 8 9 12 13 कुम्भकर्णनिर्याण (B1 D8 12 °ण ) N2 कुम्भकर्णनिष्क्रमण —*Sarga no* (figures words or both) Ś1 N1 V1 B2 D2 4 8 12 13 om Ś2 V1 D3 45 N2 V2 44 B1 3 40 B4 43 D1 84 D5 7 10 11 T3 G M 65 D9 42 T2 70 T1 72 —After colophon D3 concludes with राम G M1 2 3 with श्रीरामाय नम

## 54

Before 1 Ñ V B (B4 om 1) D6 12 *ins*

1153* स दुरद्वाराद्विनिर्यातः कुम्भकर्णो महाबलः ।
राक्षसैर्बहुभिः शूरैर्नैर्दमानैः पुरस्कृतः ।

[(l 1) N B3 4 द्वारे Ñ2 निष्क्रांत (for निर्यात) —(l 2) Ñ1 V1 D4 युक्तो (for कुद्र्) B3 D4 12 नर्दमान V3 समवृत B1 3 पुरस्त्वा B4 °क्षित (for पुरस्कृत ) ] while D5 7 9 11 S *ins*

1154* स ननादपि ना महतार गिरिकूटोपमो महान् ।
निर्ययौ नगराच्चूर्णं कुम्भकर्णो महाबलः ।

1 B2 om 1 —a) B1 ननाद स (by transp ) D9–11 ननाद च M1 सिंहनाद, G (ed ) सननाद —b) B3 D4 इव, D7 G3 3 बधि (for अभि ) Ś B1 3 (*sup lin* also) D1 3 8 12 13 समुद्र इव पर्वणि —c) D9 11 विजयन् Ś V B1 D1 8 12 13 निर्घात, B2 D2 7 T1 G3 Cv निर्घातान् ; D3 निर्वात D5 निघाय *Ck t* as in text (for निर्घातान्) —d) Ś V B1 D1–3 8 12 13 कम्पयन् (for विधमन्) Ś D8 12 शैलेन्द्रौ (*for* पर्वतान्)

2 a) N1 D4 मघवतो, B3 मघोना च B1 (*sup lin* as in text) यमस्येव महाभाग —b) Ñ1 D4 यमस्य वरुणस्य D5 7 9 11 T1 G1 M वा (for च) —c) N1 V3 वीक्ष्य B1 G3 दृष्ट्वा (for प्रेक्ष्य) D4 दृष्ट्वा भीमाक्षमायात, D5 6 T1 भीमाक्ष प्र(D6 वा)इव निर्यात —After 2 Ś D1 8 12 repeat 6 53 47 (D8 47ab only) and read 6 53 48 (except D8) while N1 reads 6 53 47–48ab and repeats 6 53 48c–49 B1 3 repeat 6 53 47 49 D1–3 13 repeat 6 53 47 and read 6 53 48–49

3 a) B3 च (for तु) D6 9 11 T2 3 G1 M2 3 विद्रुतान् (for विद्रवतो) D7 G3 तान्वीरः प्रद्रुतान्दृष्ट्वा —b) Ś N1 V3 B1 D1–4 8 12 T2 3 G3 M2 3 राजपुत्रो (for वालि°) —c) Ś N D2 3 D1 3 8 12 13 गवाक्ष गवय (N B2 3 पनस, D3 8 12 सनल) नील (D13 भीम) V B1 3 (*sup*

मन्ये तु हृदयं तस्याः कौसल्यायाः फलिष्यति ।
एकपुत्रा यदा पुत्रं विनष्टं श्रोष्यते युधि ॥ ४६

सा हि जन्म च बाल्यं च यौवनं च महात्मनः ।
धर्मकार्याणि रूपं च रुदती संस्मरिष्यति ॥ ४७

निराशा निहते पुत्रे दत्त्वा श्राद्धमचेतना ।
अग्निमारोक्ष्यते नूनमपो वापि प्रवेक्ष्यति ॥ ४८

धिगस्तु कुब्जामसतीं मन्थरां पापनिश्चयाम् ।
यन्निमित्तमिदं दुःखं कौसल्या प्रतिपत्स्यते ॥ ४९

इत्येवं मैथिलीं दृष्ट्वा विलपन्तीं तपस्विनीम् ।
रोहिणीमिव चन्द्रेण विना ग्रहवशं गताम् ॥ ५०

सुपार्श्वो नाम मेधावी रावणं राक्षसेश्वरम् ।
निवार्यमाणं सचिवैरिदं वचनमब्रवीत् ॥ ५१

कथं नाम दशग्रीव साक्षाद्वैश्रवणानुज ।
हन्तुमिच्छसि वैदेहीं क्रोधाद्धर्ममपास्य हि ॥ ५२

G 6 72. 62
B. 6.92 59
L. 6.71 58

—After 45, N2 B3 ins

1808* आर्यौ त्रायध्व शोचामि भ्रातरौ रामलक्ष्मणौ ।

[ B2 om राम ]

while D4 ins

1809* सुखं वा यदि वा दुःखं कः परं यो विधास्यति ।

46 D13 om 46 (cf v l 38) —ab) D6 T1 G (ed ) मन्ये च (G (ed ) हि) G1 मन्यते (for मन्ये तु) Ś B1 D1-3 8 11 मन्येऽद्य तस्या हृदय (for a) D1 T2 पतिष्यति, T3 वधिष्यति (sic) Ck t as in text (for फलिष्यति) Ś Ñ V B D1-3 8 12 ध्रुवं मे प्र(D8 वि)स्फुटिष्यति (for b) D4 यद्वत्स्य हि भोक्तव्य तद्वत्स्य भविष्यति —c) Ś D1 12 एकक पुत्र, D4 यदा श्वश्रू, G3 यथा पुत्र (for यदा पुत्र) —d) Ś D1 12 नष्ट पै, T2 3 प्रणष्ट (for विनष्ट) Ś V1 D1 8 13 G1 यदि, B2 रण (for युधि) D7 G3 श्रोष्यते यदि (G3 युधि) सूदित

47 D13 om 47 (cf v l 38) V2 reads 47-48 in marg —a) N B4 तु, V1 3 B2 3 च (for हि) —b) D4 जीवन Ñ1 यौवन बलमेव च —c) B2 -कर्माणि, B3 कार्यं च, D4 M3 -कार्येषु (for कार्याणि) B2 रूपाणि (for रूप च) —d) Ś1 B1 D1 3 8-11 M3 4 रुदती Ś Ñ V1 2 B D1-4 8 13 T2 3 चिंतयिष्यति (for संस्मरिष्यति)

48 D13 om up to second नि in 48a (cf v l 38) V2 reads 48 in marg (cf v l 47) —a) Ś D1-3 8 13 निशाचर, B4 निराशा हि (for निराशा नि ) G (ed ) -हत पुत्रे (for हत पुत्रे) V2 B1 D1 निशाचरहतौ पुत्रौ —b) B3 G (ed ) श्रुत्वा श्वश्रू स(G (ed ) °श्रूः)चेतना —c) N2 V B1 3 D7 8-11 आवेक्ष्यते, D4 वा विहाल, D6 आरोक्ष्यत, T1 2 प्रवेक्ष्यते (for आरोक्ष्यत) —d) T2 3 वाप्तु, M3 4 वापि (for वापि) D5 T1 प्रपत्स्यत Ś N V B D1-4 8.11.13 प्राप्य वो (Ñ V B D2 4 13 चो)पगमिष्यति

49 V1 om 49 —a) B4 कुब्जाम्, D2 8 कुब्जाद् (for कुब्जाम्) —b) N V1 2 B1 2 3 D1-3 दुर्मती, B4 D4 -वर्तिनी (for निश्चयाम्) —c) Ś D1 13 महादुःखः B1 D1-3 11 महद्दुःख B4 इदं शोकं (sic), D7 8 11 इमं शोक G1 इदं दुःखं (for इदं दुःखं) —d) Ñ2 प्रतिपत्स्यति D1 °प्रपत्स्यते, D6 T2 3 M3 °पद्यते (for प्रतिपत्स्यते) —After 49 D4 ins

1810* एवमुक्त्वा सती सीता गुणलक्षणभूषणा ।
त्राहि राघव राजेन्द्र कौसल्यानन्दवर्धन ।
सर्वेष्टु लाञ्छिता साध्वी त्वद्भीता प्रिया तव ।
स्वजनेन वियुक्ता मां पाहि राम नराधिप ।
इत्युक्त्वा विलपन्ती सा जानकी रामवल्लभा ।　(5)
भीता सीता विलापार्ता पपात धरणीतले ।
स्मरन्ती राघव देव बाष्पपर्याकुलेक्षणा ।

50 a) D4 एव ता (for इत्येव) G (ed ) मैथिली Ś D3 13 पश्यन्, Ñ B1-3 (sup lin also as in V) D1-3 13 प्रेक्ष्य, V B4 तत्र (for दृष्ट्वा) —b) N2 B4 चिंतयन्ती, D4 विलापार्ता (for विलपन्ती) T2 यशस्विनी, G1 मन° (for तपस्विनीम्) G (ed ) विलपती तपस्विनी —c) G (ed ) रोहिणी इव (with hiatus) —d) G (ed ) गता (for गताम्) Ś D1 8 13 विग्रहेण न (D8 °हे नैव) सगता —After 50 Ñ V B1 D6-7 8-11 S ins while B2 3 subst for 51ab

1811* एतस्मिन्नन्तरे तस्य अमात्यो बुद्धिमाञ्शुचिः ।

[ Note hiatus between the two halves Ñ V B1-4 तत्र G2 चेत्र (for तस्य) B4 ( (to avoid hiatus) marg also क्षेमात्यो ) सुपार्श्वो M6 ( to avoid hiatus ) ह्यमात्यो (for अमात्यो) D7 8 11 शीलवान् (for बुद्धिमान्) ]

51 a) N V B4 ऋषि (B4 °प्र) प्यो (for सुपार्श्वो) D4 धर्मात्मा (for मेधावी) G (ed ) अविंध्यो ज्ञानसंपन्नो —b) Ś B1 D1-4 8.11 13 M3 राक्षसो, Ct as in text (for रावण) D6 T1 G3 राक्षसाधिपं D7 8-11 G2 रक्षसां वर (for राक्षसेश्वरम्) —c) N1 B3 D7 8 11 Ct निवार्यमाण —d) N2 V1 2 B2 4 D6 T2 3 इद (D6 T2 हित) वाक्यमुवाच ह

52 a) Ś D4 कार्ये (for कथ) —b) Ś Ñ V B D1-4 8.11.12.13 T2 3 विश्रवस सुत (T2 °त) G2 वैश्रवणानुज Ck t as in text (for °नुज) —After 52ab M3 reads 54ab —c) D3 इच्छति, G (ed ) अर्हसि (for इच्छसि) —d) Ś D1 13 क(Ś1 कि) वा, B1 D1 3 13 कोपाद् G2 साक्षाद् (for क्रोधाद्) D4 वै, D7 8-11 च (for हि) Ś Ñ V B D1-4 8.11.12.13 अनु (Ñ1 °पि) स्मृत्य (D1 8 °त्) G1 अपास्य

G 6 72 62
B 6 92 60
L 6 71 59

वेदविद्याव्रतस्नातः स्वधर्मनिरतः सदा ।
स्त्रियाः कस्माद्वधं वीर मन्यसे राक्षसेश्वर ॥ ५३

मैथिलीं रूपसम्पन्नां प्रत्यवेक्षस्व पार्थिव ।
त्वमेव तु सहास्माभी राघवे क्रोधमुत्सृज ॥ ५४

अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशीम् ।
कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः ॥ ५५

शूरो धीमान्रथी खड्गी रथप्रवरमास्थितः ।
हत्वा दाशरथिं रामं भवान्प्राप्स्यति मैथिलीम् ॥ ५६

---

हि (sic) M5 अपास्यसि (for अपास्य हि) D4 धर्ममुत्सृज्य साधन —After 52 V3 ins only l 2 of 1813*

53 V3 om 53 —a) B1 D1 4 विद्यावेद (by transp) (for वेदविद्या) B4 स्नात ; D6 T1 3 पर, D10 G1 3 M1 स्नात Ct as in text (for स्नात) Ś D8 12 विद्यावेद्व्रतस्नात —b) Ś B1 D1–3 6 10 13 स्व (for स्व) V3 D6 2 10 11 T1 G M3 5 -कर्म D3 धर्मे (for धर्म) B1 D9 11 तथा (for सदा) N V1 B3 4 स्वधर्मे (N1 B3 °र्मे) नियतद्रिय —cd) D1–5 6,7 9–11 12 T1 3 G1 3 M1 3 4 स्त्रिय (sic) (for स्त्रिया) Ś B1 D1 8,9 11 12 राजन्, G (ed) घोर (for वीर) Ś B1 D1 3 6 13 14 M1 3 राक्षसाधिप D1 स्त्रिय इह कथ राजसुपतो हतमानस —For 53cd N V1 3 B3 4 subst

1812* कस्मात्त्व स्त्रीवधं घोर कर्तुमिच्छसि रावण ।

[ B3 कर्तुं तृणम् (for घोर कर्तुम्) N2 V1 3 अर्हसि (for इच्छसि) ]

—Thereafter V1 3 B3 4 cont while Ś B1 D 4 6 8 13 14 T1 3 ins after 53 whereas N2 ins after 54cd V3 ins only l 2 after 52

1813* दुष्टपक्षस्य भवत कुरु जातस्य चोत्तमे ।
स्त्रीवधो मानुरूपो वै विशेषेण मनस्विन ।

[ D1 दृष्ट यज्ञाय भवता (for the prior half) and जातश्च (for जातस्य) —(l 2) N2 -रूपो (for -रूपो) Ś V3 D8,9 11 [ऽ]च D1 हि (for वै) ]

54 N5 reads 54ab after 52ab —a) B3 वैदेहीं Ś1 D8 11 रूपसम्पन्नाम् (for °सम्पन्नां) —b) Ś D8 11 अपास्य वि(D11 °स्यावि)चक्षणैः N V B3–4 प्रत्य(B3 प्रेक्षा)वेक्ष सुदर्शनाः B1 D9 13 अपास्य शुभ(D11 °स्याप्य)दर्शनाः D1 3 अपास्य च सुदर्शनां —After 54ab N2 ins. 1813* —c) D1 T2 3 G3 त्वमेव हि D7 9–11 Ct सहितैव (for त्वमेव तु) Ś D8 11 सहितस्त्व परे दीप्तैः N V1 3 B3–4 सहितैव (B3 °तै) समासाद्य V3 B1 D1 3 11 स(D3 म)-हितैव रण दीप्तैः(V3 °प्ते) D1 मन्त्रिभिर्वर रौद्रं —d) D8,9 9–11 T1 G3 आहवे; G3 राक्षसैः ; Ct as in text (for राघवे) V1 वधम् (for क्रोधम्) D4 कलतयम् Ś D8 11 राघव क्रोधमुत्सृज (sic).

55 V3 damaged for 55ab except दीम् —a) N V2 B2–4 D1 तु (V3 D5 हि; B3 4 च) युद्धार्थ( N3 °र्थं) V1 तु सैन्यस्य B1 D1 3 12 हि युद्धस्य (for त्वमद्यैव) Ś D8 11 अभ्युत्थास्यसि कु(D11 यु)द्धस्य —b) Ś N1 B1 4 D1 4,8 11 T3 G1 M1 3 4 Cv कृष्णपक्षे D11 तूर्ने कृष्ण Cr m g h t as in text (for कृष्णपक्ष) D8,11 चतुर्दशीः M6 त्रयोदशीं (for चतुर्दशीम्) —V3 om 55cd —c) Ś D8 13 स त्व (for कृत्वा) D12 निर्यासि (for निर्याहि) Ś D6 [अ]मावस्यां —d) D11 बलः वृत ※ Cv चतुर्दशीम् चतुर्दश्याम्। (अमावास्याम् ?) अमावास्यायाम्। so also Cr m g h. Ct अथ कृष्णपक्षचतुर्दशी। तस्यामभ्युत्थान समरोद्योग कृत्वामावास्यायां विजयाय निर्याहि प्रस्थान कुरु ※

56 a) D8 धन्वी (for धीमान्) G1 बली (for रथी) G3 सन्नद्ध कवची खड्गी —For 56ab Ś N V B D1 4,6 11 13 subst

1814* निःसत्त्व शरी खड्गी रणे रथवरे स्थित ।

[ V1 असत्त्य D8 रथी N V B3 4 धनी (for खड्गी) Ś B4 D8 रथे (for रणे) N V B3 4 स्यन्दनास्थित ]

—c) D10,11 भीम (for राम) D4 हत्वा तौ राघवौ वीरौ —d) Ś B1 D1–4 6,13 14 T3 M3 राज(T3 M3 भवा) प्राप्स्यसि N V1 3 B1 4 पुन प्राप्स्यति (for भवान्प्राप्स्यति) —After 56 Ś N2 V1 3 B D1–4,6,11 13 14 T2 3 ins

1815* एवमुक्त्वा तु धर्मात्मा बलात्सगृह्य वीर्यवान् ।
अपाकृष्य वैदेहीं सकाशाद्राक्षसेश्वरम् ।
समवेक्ष्य च वैदेहीं रूपं सर्वगुणान्वितम् ।
नवाशोकपदं शेषो रावणस्य दुरात्मन ।

[ (l 1) Ś D8 तु धर्मात्मा D4 दशग्रीव (for तु धर्मात्मा) D1 T2 3 संक्षिप्य (for संगृह्य) —(l 2) B3 तत्पश्चात्, D11 अपाकृष्य (for °कृष्य) —B3 om (hapl) from the post half up to the prior of l 3 D4 राजर्षिर —After l 2 D11 ins.

1815(A)* अन्योन्यवचनं वैचित्र्यमतो राजात्मजः ।
राक्षसेन्द्रो महा क्रुद्धो भव पार्थिवन गत ।
हनिष्यामि न संदेहो भव राम च वानरम् ।
अथ विज्ञाप्य सचिवा रावणाय निशाचरम् ।

[ (l 2 3) Note hiatus between the two halves.] —D1 om l 3 —(l 3) Ś D8,11 तत्रैव, D11 सर्वेषु (for °रेषु) D1 T2 3 तु (for च) Ś D8,11 सैन्य, D6 स च (for सर्वं) D6 गुणैर्वृतं —(l 4) D6 धर्म arta अतन्द्रो रावणस्य विनाशितं ]

स तद्रात्मा सुहृदा निवेदितं
    वचः सुधर्म्यं प्रतिगृह्य रावणः ।
गृहं जगामाथ ततश्च वीर्यवा-
    न्पुनः सभां च प्रययौ सुहृद्वृतः ॥ ५७

G 6 72. 69
B. 6 92 64
L. 6 71. 66

इति श्रीरामायणे युद्धकाण्डे अशीतितमः सर्गः ॥ ८० ॥

57 G (ed ) om 57ᵃᵇ. —ᵃ) Ś D₈.₁₁ स निर्दिष्टात्मा D₃ एव दुरात्मा, D₆ स तु दुरात्मा (for स तद्रात्मा) D₅ सुहृदं (for सुहृदा) B₁ [म]नु (for नि ) D₄ सद्रा दुरात्मा सुनिवेदितं परं. —ᵇ) V₃ damaged from धर्म्यं up to ग्र (see var ) in 57ᵇ. Ś Ñ B D₈.₁₁ स धर्म्यं (Ñ₂ B₂.₃ °र्म्यं ), D₁₂ सुधर्मं (for सुधर्म्यं ) Ś D₈.₁₂ G₁.₃ M₁.₂.₃ परि (for प्रति ) —ᶜ) D₄ प्रविश्य (for जगाम) D₁ M₂.₃ [म]मु, D₂ T₂.₃ [म]वि ; G₁ [म]धि (for [म]थ) G₁ नगरं (for ततः) D₁₁ मु ; D₈ स (for च). Ś D₁₂ तत स वीर्यवान्, Ñ₁ च राक्षसेश्वर ; V₂.₃ B₂₋₄ निशाचरेश्वर( V₃ damaged up to श्व )र: ; D₄ महे समन्वितो; D₁ T₂.₃ स्व मु( T₃ स )- वीर्यवान् (for ततश्च वीर्यवान् ). —ᵈ) B₁ चाभि ; D₁₋₃.₁₁ चा( D₁ चा )नि; D₆ प्रेक्ष्य (for च प्र ). Ś D₈.₁₂ चाभिययौ सुहृत्ति , Ñ V B₁₋₄ प्राप( Ñ₁ V₃ °प्य ) सुहृद्गणैर्वृत (for च प्रययौ सुहृद्वृत ) D₄ भूय सभां सचिवैः समन्वितान्

—For 57ᶜᵈ G (ed ) subst

1816* गृहं गत्वाथ स पुन सभां प्राप सुहृद्वृत ।

Colophon —*Kanda name* Ñ V₁ B D₂.₃.₁₂ लङ्काकाण्डे —*Sarga name* Ś B₁ D₁₋₈.₁₁.₁₂ सुपार्श्ववाक्यं Ñ V B₂₋₄ सीतावधनिवारणं D₃ रावणकोप —*Sarga no* (figures words or both ) Ś₁ Ñ₁ V₂ B₂.₄ D₁.₄.₈.₁₁.₁₂ om., Ś₁ V₁ 72 Ñ₂ D₁ 74, V₂ 72 B₁.₃ 68, D₂ 76 D₃₋₇.₁₀ T₁ G M₁.₂ 93, D₆ 69, D₁₁ 90, T₂ 76, T₃ 100, M₃ 94, B (ed. ) 92. —After colophon, G M₁.₂ conclude with श्रीरामाय नम .

## ८१

G 6. 73. 1
B 6. 93. 1
L 6. 72. 1

स प्रविश्य सभां राजा दीनः परमदुःखितः ।
निषसादासने मुख्ये सिंहः क्रुद्ध इव श्वसन् ॥ १

अब्रवीच्च तदा सर्वान्बलमुख्यान्महाबलः ।
रावणः प्राञ्जलीन्वाक्यं पुत्रव्यसनकर्शितः ॥ २

सर्वे भवन्तः सर्वेण हस्त्यश्वेन समावृताः ।
निर्यान्तु रथसंघैश्च पादातैश्चोपशोभिताः ॥ ३

एकं रामं परिक्षिप्य समरे हन्तुमर्हथ ।
प्रहृष्टाः शरवर्षेण प्रावृट्काल इवाम्बुदाः ॥ ४

अथ वाहं शरैस्तीक्ष्णैर्भिन्नगात्रं महारणे ।
भवद्भिः श्वो निहन्तास्मि रामं लोकस्य पश्यतः ॥ ५

इत्येवं राक्षसेन्द्रस्य वाक्यमादाय राक्षसाः ।
निर्ययुस्ते रथैः शीघ्रं नागानीकैश्च संवृताः ॥ ६

## 81

1 $^{ab}$) D4 स (for स) D3 द्विधा (for राजा) Ñ V B3-4 transp राजा and दीन B3 -दुर्मति (for -दुःखित) D13 सभायां दीनमानस (for $^{b}$) —$^{c}$) Ś D5.11 निपपात, B1 T3 विषसाद(sic) (for निषसाद) —V3 damaged from मुख्ये up to 1$^{d}$ Ñ2 V1 B4 D13 दिव्ये, T2.3 शुद्ध (for मुख्ये) —$^{d}$) D13 सर्प (for सिंह) V1.2 क्षुब्ध (for क्रुद्ध) B3 क्रुद्ध सर्प (for सिंह क्रुद्ध)

2 V3 om 2$^{ab}$ —$^{a}$) Ś B3 D1-4.6.11 उवाच स, D13 सब्रवीत्तु D6.7.9-12 T2 G1.3 M3.5 सचिवान्, D1.13 T2.3 तत (for तदा) —$^{b}$) D13 बलाध्यक्षान् (for बलमुख्यान्) D3 महाबलान् (for °बल) Ñ V1.2 B1-4 बलाध्यक्षानुपस्थितान् —$^{c}$) Ś Ñ1 V B D8.13 S Cg k t प्राञ्जलिर् (for प्राञ्जलीन्) ॐ Cr रावण प्राञ्जलिर्वाक्यमिति पाठ ।, Cg रावण प्राञ्जलिरिति । मनुनयाथमञ्जलिकरणम् ।, so also Ck t ॐ —$^{d}$) D1 पुत्रस्य (hypm) (for पुत्र) Ś B1 D1.2.4.6.8 -कर्षित (for -कर्शित) Ñ1 V1.2 B1-4 D13 इन्द्रजिद्(D13 पुत्रस्य च)धकर्शि(V2 B4 °र्षि)त, Ñ2 V2 इन्द्रजिद्वधकर्शितान्

3 D5 om 3-4$^{b}$ —$^{a}$) Ś D13 सर्वमायाश्च पुत्रक, D13 शीघ्रं भवत सर्वे वै —$^{b}$) Ś D1-3.11 सुदर्शिता, B1 D13 च(D13 सु) संवृता, D6 समन्विता (for समावृता) —$^{c}$) Ñ1 B3 D5.9-11 निर्यात (for निर्यान्तु) Ś D13 -सघेन, V2 वृन्दैश्च (for -संघैश्च) —$^{d}$) Ñ2 V1 D1.3.6.7.13 G1 M3 पदातैश्, D9-11 हस्त्यश्वैर् (for पादातैश्) Ś D13 G1 M3 चैव; B1 D1.6 T1 G3 M3 इव; D3 चापि; D6 चापि (for चोप) Ś D13 शोभित; B1 शोभिता D13 -सेविता (for -शोभिता) —For 3, D4 subst.

1817* सव भवन्त समन्ताच्चतुरङ्गबलैर्वृता ।
सचक्षाश्वान्विता शीघ्रं निर्यान्तु विजयाय मे ।

—After 3, Ñ V B3-4 ins.

1818* नानाप्रहरणाकीर्णा भूषणोत्तमभूषिता ।
[V3 भूषणा (for भूषिता).].

while D13 ins. l. 1 only of 1819*

4 D5 om 4$^{ab}$ (cf v l 3) D13 reads 4$^{ab}$ after 1820*. —$^{a}$) Ś V2 B1.3 D8.11 एवं (for एकं). D13 transp. एकं and रामं Ś1 D13 समाक्षिप्य (for परिक्षिप्य) D4 रामं च लक्ष्मणं वीर —$^{b}$) D1 संयुगे, D1 वानरान् (for समरे) —V3 om 4$^{c}$–5$^{b}$ —$^{c}$) Ś D1.3.11 प्रवृद्धा, D1.3 G1 M3 प्रवृ(G1 M3 °वि)द्धा, D6.9 T1.3 G3 M3 वर्षेत, T3 वर्षेत, M1.2 प्रवृद्धा (for प्रहृष्टा) Ś1 D6.9-11 T2.3 M1.2 Ct वर्षाणि, Cg as in text (for वर्षेण) —$^{d}$) Ś B1 D1-4.8.11.13 T2.3 प्रावृषीव बलाहका —For 4$^{cd}$, Ñ V1.2 B1-4 subst D13 ins l 1 only after 3, while G (ed) subst for 4

1819* सर्वत सर्वपत्तन रणकर्मणि पण्डिता ।
बाणवर्षाणि मुञ्चन्तु प्रवृद्धा इव तोयदा ।

[(l 1) V2 प्रवल (hypm) (for पत्तन) V1 सर्वे सर्वप्रयत्नेन (for the prior half) —(l 2) Ñ2 मुञ्चत°. B4 प्रावृषीव च (for प्रवृद्धा इव)]

—For 4$^{cd}$, D13 subst

1820* मुञ्चन्तु शरजालानि प्रावृषि इव तोयदा ।
समन्तात्सर्वं पत्राय ग्रावैर्नानाविधै शितै ।
[Note hiatus in l 1.]

5 V3 om 5$^{ab}$ (cf v l 4) —$^{a}$) B3 पश्चाद् (for अथ वा) D5 त (for (अ)ह) Ñ V1.2 B1.4 पश्चादहं शितैस्तीक्ष्णैर्(Ñ1 V1.2 °बाणैर्) —$^{b}$) Ñ1 V1.2 B1-4 भिन्नम् (for भिन्न) Ñ1 V3 शत्रुं (for गात्रं) D9-11 [आ]हवे (for रणे) Ś B1 D1-4.6.8.13 भिन्न(D13 च्छिन्न)सर्वाङ्गमाहवे —$^{c}$) Ñ V1.2 B1-4 मयि निर्याद्यमिष्यामि —For 5$^{cd}$, Ś V1 B1 D1-4.6.8.13 subst

1821* सह सर्वैर्बलैस्तत्र रामं धक्ष्यामि संयुगे ।
[Ś D4.13 transp सह and सर्वैर्; V1 B1 D6 च (for त) Ś D4.13 वध्यामि, B1 हन्यामि (for धक्ष्यामि).]

—For 5, D4 subst

1822* अथाहं बाणवर्षेण भिन्नदेहं पराजितम् ।
वधिष्यामि महाबाहुं रामं रक्षोगणान्वित ।

6 $^{a}$) Ñ V B1-4 D1.7.9-12 T1 G1.3 M Ct [ए]वम् । D4 [म]त्य (for [ए]वं) Ś V1 B1 D1-4.6-13 T2.3

G 6 73 14
B 6. 93 13
L 6 72 12

केशान्कर्णललाटांश्च नासिकाश्च प्लवंगमाः ।
रक्षसा दशनैस्तीक्ष्णैर्नखैश्चापि व्यकर्तयन् ॥ ११
एकैकं राक्षसं संख्ये शतं वानरपुंगवाः ।
अभ्यधावन्त फलिनं वृक्षं शकुनयो यथा ॥ १२
तथा गदाभिर्गुर्वीभिः प्रासैः खड्गैः परश्वधैः ।
निर्जघ्नुर्वानरान्घोरान्राक्षसाः पर्वतोपमाः ॥ १३
राक्षसैर्वध्यमानानां वानराणां महाचमूः ।
शरण्यं शरणं याता रामं दशरथात्मजम् ॥ १४
ततो रामो महातेजा धनुरादाय वीर्यवान् ।
प्रविश्य राक्षसं सैन्यं शरवर्षं ववर्ष ह ॥ १५
प्रविष्टं तु तदा रामं मेघाः सूर्यमिवाम्बरे ।
नाभिजग्मुर्महाघोरं निर्दहन्तं शराग्निना ॥ १६
कृतान्येव सुघोराणि रामेण रजनीचराः ।
रणे रामस्य ददृशुः कर्माण्यसुकराणि च ॥ १७

---

नागान्, D6 बाणान् (for भयान्) —ᶜ) Ñ V3 B3.4 D4.11 वेगेन, G1 सहसा (for समरे) —ᵈ) D13 वानरा स, M1.2 Cg राक्षसानां (for वानरेन्द्रा) D5 समरे वानरोत्तमा

11 V1 om 11 (cf v l 7) Ñ2 om 11ᵃᵇ —ᵃ) Ś V1 D1.3.9.13 M4 केश (for केशान्) D6.7 T1 कर्णान् (for कर्ण) Ś V2 B1 D1.8-11 ललाट (for ललाटांश्च) D1 om च (subm) Ñ1 V3 B2-4 कशा न्कर्णांस्तथाक्षीणि, D3.4.12 कशाकर्णललाटानि —ᵇ) B1 T1.2 नासिकां (for नासिकाश्च) —Ñ1 reads 11ᶜᵈ after 13 —ᶜ) B1 D4.6 T1 G1.2 राक्षसान्, Cg as in text (for रक्षसा) D13 करजैश्च (for दशनैस्) —ᵈ) Ś Ñ V1.2 B D1-4.8.12 वि (Ś D3.12 [प्र]च, D1 नि) चकर्तिरे, D6 Cg [अ]पि वि(Cg न्य)कर्तयन्, D7 G2 [अ]पि न्यदारयन्, M3 [अ]पि व्यकृन्तयन् (for [अ]पि व्यकर्तयन्) D11 दशनैश्च चकर्तिरे —After 11, D13 ins

1833* बिभीषणस्य सचिवा राक्षसा महाहवे ।
तेऽन्योन्यमभिसंगत्य क्षिपन्तो नामभिर्मिथः ।
आक्षिपन्तो विशन्तोऽस्मै युयुधुर्द्वन्द्वयोधिनः ।
अन्योन्यं मुसलैर्घोरैर्जघ्नुस्ते शूलशक्तिभिः ।
भुशुण्डिभिश्च गदया तोमरैः प्रासपट्टिशैः । [5]
भिण्डिपालैः परिघैर्मुद्गरैश्च परश्वधैः ।
यष्टिभिर्भिन्दिपालैश्च राक्षसा राक्षसान्युधि ।
निजघ्नू राक्षसान्घोरास्तमासि च बभाषिरे ।

12 ᵃ) V1 युद्धे (for संख्ये) —ᵇ) Ñ V1.2 B2-4 D4.5 G1 वानरयूथपा —ᶜ) Ś Ñ V B D1-4.8.9.11.12 T1.2 बलिनो (D8 T1.2 °न) D3 फलितं D9-11 पतित (for फलिनं) —ᵈ) D1 वृक्षान् D13 गगनगा (for शकुनयो) —After 12, D3 ins

1834* किरीटहारकेयूरान्वभूषणतोयमा ।
पाशौ समुद्गर बाहुभ्यां पातयामासुरुद्धतान् ।

13 Ś1 D8.11 om 13-15 Ś2 om 13-15ᵃ —ᵃ) D6-7.9-11 T1.2 तदा (for तथा) G1 भीमाभिर् (for गुर्वीभिर्) —ᵇ) D1.3.11 परश्वधैः —For 13ᶜᵈ, Ñ V B D2-4.12 subst.

1835* न गदाभिश्च गुर्वीभिः पट्टिशैः परिघैरपि ।
[L (ed) om च (subm) B1 D1-4 खड्गैश्च (for गुर्वीभिः) D13 ततो गदाभिरसिभिः (for the prior half) D3 तथा (for अपि) B2 D3.4 परिघैः पट्टिशैस्तथा (for the post half)]

—ᶜ) Ñ1 B2 D1.2.7.13 G M निजघ्नुर् Ñ1 शूराः, V1.2 B3.4 (after corr) D3.4 शूरान्, B1 D1 G1 सर्वे, B1 (before corr) सर्वे, D13 M1.2.3 सर्वान् (for घोरान्) —ᵈ) Ñ1 रणमूर्धनि D1.2 L (ed) पर्वतोप(L [ed] °च)मान् —After 13, Ñ2 reads 11ᶜᵈ

14 Ś D8.13 om 14 (cf v l 13) V2.3 B4 D1.8.13 om 14-15 V1 om 14-15ᵃ G (ed) om 14 Ñ1 reads 14-15 while B2 reads 14-15ᵃ in marg —ᵃ) K (ed) युध्यमानानां —ᶜ) B2 जग्मुर् D4 यान्ति (for याता)

15 Ś1 V2.3 B4 D1.8.11.13 om 15 (for Ś1 D8.11, cf v l 13 and for the rest, cf v l 14) Ś2 V1 om 15ᵃᵇ (cf v l 13 and 14 respy) Ñ1 reads 15, B2 reads 15ᵃᵇ in marg (cf v l 14) —B1 om (hapl ?) 15ᶜᵈ —ᶜ) G2 रक्षसां (for राक्षसं) —Ś1 Ñ2 V1 om (hapl) 15ᵈ-16ᵃ —ᵈ) B1 D3.4 स; D4.11 च (for ह)

16 Ś1 Ñ2 V1 om 16ᵃ (cf v l 15) —ᵃ) Ś1 Ñ1 V3 B D2-4.8.12 T1.2 प्रवि(Ś1 D8.12 °वि)ष्ट राक्षसं सैन्यं D13 प्रविष्टं राक्षसाः सैन्यं —ᵇ) Ś B1 D1-4.8.12 T1.2 घनै, Ñ1 मेघैः; Ñ2 V3 B2-4 मेघ (sic) (for मेघा) Ś Ñ1 V3 B1 D2-4.8.11 T1.2 [भा]नुं(B1 °ता) V3 [भा]नुर्(sic) (for [अ]म्बरे) D13 मेघ सूर्ये इवाम्बरे (sic) —ᶜ) Ś Ñ V2 B2-4 D4.12 नाभि(B2.3 °भि ज्ञातः V2 D2.3.12 M1.2 ना(D2 ते)भिजग्मुर्; B1 D1-3.10.11 T1 नाभिजग्मुर् (for नाभिजग्मुर्) Ś Ñ V B D2-4.12.13 M1.2 तदा रामं D9-11 महाघोरा —ᵈ) Ś Ñ V B1.2 D1-4.11.12.13 शराचयः, B1 महार्चिष (for शराग्निना)

17 ᵃ) D13 [कृ]तं (for [कृ]ता) Ś Ñ1 V1.2.3 B1 D1-4.8.11 T1.2 निहता(B1 °हता) युधि रामेण (Ñ2 घोराहव) —ᵇ) Ś V1.2 B1 D2.4.8.12 T1.2 घोराहव D3 राक्षसाश्च (hypm), D13 राघवे (for रामेण) —ᶜ) Ñ2 V

चालयन्तं महानीकं विधमन्तं महारथान् ।
ददृशुस्ते न वै रामं वातं वनगतं यथा ॥ १८
छिन्नं भिन्नं शरैर्दग्धं प्रभग्नं शस्त्रपीडितम् ।
बलं रामेण ददृशुर्न रामं शीघ्रकारिणम् ॥ १९
प्रहरन्तं शरीरेषु न ते पश्यन्ति राघवम् ।
इन्द्रियार्थेषु तिष्ठन्तं भूतात्मानमिव प्रजाः ॥ २०
एष हन्ति गजानीकमेष हन्ति महारथान् ।
एष हन्ति शरैस्तीक्ष्णैः पदातीन्वाजिभिः सह ॥ २१
इति ते राक्षसाः सर्वे रामस्य सदृशान्रणे ।
अन्योन्यं कुपिता जघ्नुः सादृश्याद्राघवस्य ते ॥ २२

G 6.73 26
B 6.93 24
L 6.72 25

B2-4 D1 चित्राणि (for रामस्य) D4 ददृशे(sic) G1 कर्माणि (for ददृशु) —$^d$) B2 D4 सर्वाणि (for कर्माणि) G1 ददृशु सुकराणि Ś Ñ V B1.3.4 D1.3.8.7-12 G1 ते, D3 वै (for च) ❀ Ct रजनीचरा रामस्य रणेऽसुकराणि कर्माणि रामेण कृतान्येव ददृशु न तु क्रियमाणानि ❀

18 $^a$) Ñ2 B4 दल(B1 °भ)यत, V3.4 B3 धर्षयत, B3 दारयत, D3 कालयतम्, D11 तालयत Ś B1 D1-4.8.11 अनीकानि, D5.11 महासैन्यं (for महानीकं) —$^b$) Ś B1 D1.4.8.11 क्षपयत, D11 कपयत (for विधमन्तं) M2 महारथ —$^c$) D6 T3.4 तम (for राम) G1 transp वै and राम Ś Ñ V B D1-4.8.12.13 न ते(B1.2 त) ददृशिरे राम —$^d$) Ś D6.12 सिंह (for वात) N V3.4 B2-4 D1 वायु व्योम (for वात वनं) D6 वनचरं, L (ed) वनगत (for वनगतं) D11 वातनुस गज यथा

19 $^{ab}$) T2 भिन्न (for छिन्न) D4.6 M2 छिन्न (for भिन्न) B1 D1-4 विपर्यस्त (for शरैर्दग्ध) M2 प्रभिन्न (for प्रभग्न) N V1 B1.4 शर, D1 च पु (for शस्त्र) Ñ2 -त्तादित, D1-8 पातत, D4 पाणित (for पीडितम्) G1 भग्न शस्त्रेण पीडित M1.2 सद्य सद्यानिपीडित (for $^b$) Ś D6.12 छिन्न छिन्नमपर्यस्त प्रभिन्न शस्त्रपातित, D11 छिन्न छिन्न शरैस्तीक्ष्णै राक्षसाश्च महामृधा —$^c$) D11 रामस्य (for रामेण) B3.4 G1 ददृशे (for ददृशुर्) —$^d$) Ś1 विप्रकारणं, B1 सम्प्रहारिण, M1.2 शीघ्रगामिन (for शीघ्रकारिणम्)

20 $^a$) B1.2 D1-4 स (for सु) D6 transp न and ते N V B2-4 न पश्यति स्म(V3 च) (for न ते पश्यन्ति) —$^c$) D1 इन्द्रियार्थेषु च (hypm) Ś1 N V B4 D1-4.8.12.13 वर्तत (for तिष्ठन्त) B1-3 इन्द्रियार्थे(B1 °र्थेषु) प्रवर्तत —$^d$) G1 सर्वस्यापिनमीश्वर —After 20, D6 ins

1836* रामबाणविनिर्भिन्ना रथाश्वगजकोटय ।
निपतन्ति रणे शूरा पदाता शस्त्रपाणय ।

21 $^a$) D4 एको (for एष) T2 महानीकम्, Cr m k as in text (for गजानीकम्) V3 एष दल गजानीकान्, B3 मनीक दलसाहसम् —$^b$) D4 एको (for एष) and रणे (for महा) D11 रथ (for रथान्) —$^c$) D4 एको (for एष) and रणे (for शरैस्) —$^d$) D12 च समतत, G1 सह वाजिभि (by transp), M1 वाजिनस्तथा —After 21, Ś B1 D1-4.8.11 T1.2 G (ed) ins while Ñ1 ins after 22$^{ab}$

1837* अथ रामो महातेजा युध्यतामेव रक्षसाम् ।
प्रज्ञामपाहरत्तेषां मोहनास्त्रबलेन च ।

[(l 1) B1 एष D4 ततो (for अथ) D4 रघुवंशविवर्धन (for the post half) —After l 1, D4 ins

1837(A)* अल्पश्वेगरूपस्तु यथार्थ सबराक्षसाम् ।
सम्मोहन महास्त्र तु दधौ रामोऽतिविक्रम ।
सधाय शरमस्त्रेषु रक्षःसु विससर्ज स ।
रामबाणो महावेगो राक्षसानामुदीर्णे ।

—(l 2) B1 D1-4.8 प्रज्ञां व्यापाहरत(D3 °हरत)स, D4 प्रज्ञा मपाहरतास (for the prior half) Ñ2 प्रज्ञा चापहरत्तेन मोहना स्त्रेण संयुगे ]

—Then Ñ2 cont 1839*

—After 21, Ñ V B2-4 ins

1838* एवमेव हि तान्सर्वान्राक्षसान्निशितैः शरैः ।
सूदयत्येव काकुत्स्थः कुञ्जरान्वाजिनस्तथा ।

[(l 1) V1 एव V3 हत्वा (for एवम्) B3 एवमेव V3 damaged from हि up to निशि —(l 2) Ñ1 V1 B2 [अ]थ, B3 [भ]ति (for [य]ेव) B4 वाजिभि सह (for वाजिनस्तथा) ]

22 B1 om 22$^{cd}$ —$^a$) V [ए]व (for ते) —$^b$) G1 M2.3.4 सदृशा (for सदृशान्) Ñ V B2-4 वाक्यमूचुस्तदा युधि, D12 दृष्ट्वा रामपराक्रमे, G2 राम सदृशु रणे ❀ Ct 'सदृशा रावणस्यैते रणे राक्षससत्तमाः' इति पूर्वविपाठे रावणेन देवासुरयुद्धादौ तात्पर्यार्थं मूलपलतया तेषां दृष्टप्रत्ययात्‌ मत्पूर्जितबलानामेव सगृहीतत्वात्तथा रावणनादृश्यम् ❀ —For 22$^{cd}$ Ś D1-4.8.11 T1.2 G (ed) subst Ñ2 cont after 1837*

1839* ते विमूढा विसंज्ञाश्च राममूतमिदं जगत् ।
ददृशू राक्षसास्तत्र ततो जघ्नुः परस्परम् ।

[(l 1) Ñ2 ते मूढा (subm) D4 विमूढास्तु D6 ते मूढाश्च (for ते विमूढा) T1 विसंज्ञा विमूढाश्(by transp) —(l 2) Ñ2 वतो (for ततो) T2.3 जग्मु (sic) ]

—After 22$^{ab}$, Ñ2 ins 1837* —D12 reads 22$^{cd}$ twice (var) —$^c$) Ś D1.3.4.8.11.13 सहिता D2 सहसा, D12 (first time) समरे (for कुपिता) D12 (second time) परस्पर समाजघ्नु —After 22$^c$ N V B2.4 ins

1840* दृष्ट्वाधिपरक्षर्थे ।
राक्षसा समरे शूरा

अनीकं दशसाहस्रं रथानां वातरंहसाम् ।
अष्टादश सहस्राणि कुञ्जराणां तरस्विनाम् ॥ २८
चतुर्दश सहस्राणि सारोहाणां च वाजिनाम् ।
पूर्णे शतसहस्रे द्वे राक्षसानां पदातिनाम् ॥ २९
दिवसस्याष्टमे भागे शरैरग्निशिखोपमैः ।
हतान्येकेन रामेण रक्षसां कामरूपिणाम् ॥ ३०
ते हताश्वा हतरथाः श्रान्ता विमथितध्वजाः ।
अभिपेतुः पुरीं लङ्कां हतशेषा निशाचराः ॥ ३१
हतैर्गजपदात्यश्वैस्तद्बभूव रणाजिरम् ।
आक्रीडभूमी रुद्रस्य क्रुद्धस्येव पिनाकिनः ॥ ३२
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
साधु साध्विति रामस्य तत्कर्म समपूजयन् ॥ ३३
अब्रवीच्च तदा रामः सुग्रीवं प्रत्यनन्तरम् ।
एतदस्त्रबलं दिव्यं मम वा त्र्यम्बकस्य वा ॥ ३४

निहत्य तां राक्षसवाहिनीं तु
रामस्तदा शक्रसमो महात्मा ।
अस्त्रेषु शस्त्रेषु जितक्लमश्च
संस्तूयते देवगणैः प्रहृष्टैः ॥ ३५

G 6 73 0
B 6 93 38
L 6 72 39

इति श्रीरामायणे युद्धकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

---

28 Ś D8 om (hapl ?) 28-29 D4 transp ab and cd —a) B1 D1-4 12 13 शत (for दश) —b) D12 -रहण (for रंहसाम्) —c) Ñ V3 2 B2-4 D5 T1 अष्टाशीति, D2 चतुर्दश (for अष्टादश) —D1 13 om (hapl) 28d-29a —d) D13 गजाना वारहसा

29 S D5 om 29, D6 13 om 29a (for both cf v l 28) D1 om (hapl) 29ab —a) Ñ V2 3 B2-4 चतु पष्टि, D3 अष्टादश, G1 चतुर्विंशत् —V1 om (hapl) 29bc V3 damaged for b B3 repeats wrongly 29b in place of 29d —b) D4 स (for च) —c) G3 दश (for शत) Ñ V1 2 B2 4 त्रिंशच्छतसहस्राणि —d) N V B1 2 4 D1-4 12 13 पदातीना च रक्षसां

30 a) D5-7 10 11 T1 G3 M6 Cr k t [अ]ष्टभागेन, Cm g as in text (for [अ]ष्टमे भागे) Ś B1 D1-4 8 12 निमेषान्तरमात्रेण —b) D9 बाणैर् (for शरैर्) —c) D13 हता तेन —d) Ś B1 D1 4 8 12 लील्या त्रिदिवात्मना, D6 T2 3 लील्या भीमकर्मणा, D13 राक्षसा कामरूपिण

31 V3 om 31-32b —ab) Ś D8 12 सत्र, N2 V1 2 B1 3 D1 5 11 T1 G2 3 M1 3 शान्ता D4 भूता (for श्रान्ता) M3 शतासि (for श्रान्ता वि) Ś N V1 2 B2 4 D1-3 8 12 T3 3 विगलित, B1 च निगत (for विमथित) D6 विध्वस्त गलितध्वजा (for b) D13 त दृष्ट्वा निहता दृष्ट्वा हता निगत साध्वस(sic) —c) B4 हतशिष्टा

32 V3 om 32ab (cf v l 31) —a) Ś B1 D1 4 8 12 13 L (ed) निहते (B1 हतैस्तै) रथ (L [ed] °तैरथ) पा (D1 °प) दातिभि, N V1 2 B2 4 G (ed) हतै रथ (G [ed] °तैरश्वै) पदातैश्च —b) Ñ V1 2 B3 (before corr as in text) 4 समभूत —cd) Ś N V B1-4 D1-4 8 12 13 M1 माक्रीडमिव B1 माक्रीड इव, D5 भाक्रीडभूत D7 10 11 G2 transp रुद्रस्य and क्रुद्धस्य Ś B1 D1-4 8-12 T2 3 G2 M3 6 [इ]व (Ś D8 12 M3 तु ; D1 च) महात्मन, Ñ V B1 3 D12 [अ]भि (B3 1 D13 नि)धन पशून् (for [इ]व पिनाकिन) ✲ Cg रुद्रस्य आक्रीड क्रीडास्थान श्मशानमिव बभूव। आर्षं नपुसकत्वम्।, Ck आक्रीडभूमि । श्मशानो इव । क्रीडाभूमिरिति यावत्।, so also Ct ✲

33 T1 damaged for ab —After 33b, Ñ1 B3 (m) ins

1848* सयक्षोरगराक्षसा ।
सेन्द्रा साप्सरस सर्वे

—B3 reads b in marg —b) M1 2 साध्यास् (for सिद्धाश्च) —cd) D1-3 transp तत् and कर्म M1 2 transp रामस्य and तत्कर्म B1 प्रत्यपूजयन्

34 a) Ś D8 12 तु (for च) D13 अथाब्रवीत्ततो राम —b) Ś B1 D1 3 8 12 तदनन्तर, Ñ V B2-4 सविभीषण, D2 वानरोत्तम, D4 यदुतावर, D13 प्रत्यनद्गत, M3 समनतर (for प्रत्यनन्तरम्) —After 34ab D5-7 9-11 S ins

1849* विभीषण च धर्मात्मा हनूमन्त च वानरम्।
जाम्बवन्त हरिश्रेष्ठं मैन्द द्विविदमेव च।

—c) Ś D8 12 यत्तद् (for एतद्) Ś Ñ V B3 4 D1 4 सौम्य, D4 T2 3 G1 M1 2 घोर D8 12 सोम्य D6-11 भीमं (for दिव्य) B1 D13 एतदस्त्र च मे सौम्य (D13 बल चैव) —d) D4 च (for first वा) B1 समरे, D13 पर्याप्त (for मम वा) Ś1 D4 च (for second वा) —After 34 Ñ V B2-4 ins

1850* तृतीयस्य कपिश्रेष्ठ लोके नान्यस्य कस्यचित्।

while D4 13 ins

1851* तृतीय त्र्यम्बकस्य लोके रामस्य धीमत ।
न विद्यते चतुर्थस्य लोके भूतस्य कस्यचित्।
[(1) 1) D13 द्वितीय (for तृतीय)]

35 G (cd) om 35 T1 damaged from a up to अस्त्रेषु in c —a) Ś D8 12 निर्भिद्य (for निहत्य)

## ८२

G 6. 74. 1
B 6. 94. 1
L 6. 73. 1

तानि नागसहस्राणि सारोहाणां च वाजिनाम् ।
रथानां चाग्निवर्णानां सध्वजानां सहस्रशः ॥ १

राक्षसानां सहस्राणि गदापरिघयोधिनाम् ।
काञ्चनध्वजचित्राणां शूराणां कामरूपिणाम् ॥ २

निहतानि शरैस्तीक्ष्णैस्तप्तकाञ्चनभूषणैः ।
रावणेन प्रयुक्तानि रामेणाक्लिष्टकर्मणा ॥ ३

दृष्ट्वा श्रुत्वा च संभ्रान्ता हतशेषा निशाचराः ।
राक्षस्यश्च समागम्य दीनाश्चिन्तापरिप्लुताः ॥ ४

विधवा हतपुत्राश्च क्रोशन्त्यो हतबान्धवाः ।
राक्षस्यः सह संगम्य दुःखार्ताः पर्यदेवयन् ॥ ५

Ś V3 D6.11 सा B1.4 D1-4 च, B3 सदा, D4 वरा, D5 T1.2 परा (for तु) D7.9-11 G1.2 M3.5 राजवाहिनी (for वाहिनीं तु) —d) B1 ततो (for तदा) N V B2-4 D13 यत्र (for शक्र) Ś D6.12 समप्रभाव (for समो महात्मा) —e) Ś N V B D1-4.8.11 अक्षेषु दिव्येन, D12 बाह्मण सोर्ग्रेण (for अक्षेषु शक्रेषु) N V B D1 गत (for जित) B4 M1.2 प्रमद्य (for क्रमद्य), Ś D6.12 [ऽ]भूत्, D1-4.10 स, D5 T1.2 सद् (for च) —f) Ś1 D5 स (for म) B1 D1 समस्तै, D3 G3 M1.4 प्रहृष्ट (for प्रहृष्टै) N V B2-4 देवैस्तथा (N2 °स्तदा) स्तूयत संप्रहृष्टै, D4 सस्तूयमान सुरसिद्धसंघै

Colophon —*Kanda name* Ś1 V2 om N B D6.11 लक्का° —After Kanda name, D12 ins युद्धपर्वणि —*Sarga name* Ś D6.12 राक्षसवध, N V B1.4 गन्धर्वास्त्रयुद्ध, B1 D1-4 रामास्त्रयुद्धं, B3 गन्धर्वास्त्रप्रयोग; D4 रामास्त्रसंमोहनं, D11 बलविध्वंसन, G3 मूलबलवध —*Sarga no* (figures words or both) Ś1 N1 V2 B2.4 D3.4.5.11.12 om, Ś1 V1 72, N2 76, V3 73 B1.3 69, D1 75, D3 77, D7-9.10.12 T1 G M1.2 94, D8 70, T2 97, T3 101, M1.3 93 —After colophon D2 concludes with राम, G M2.3 with श्रीरामाय नम, M4 with श्रीरामचन्द्राय नम

## 82

1 a) B1 अपि (for तानि) D1 T1 G3 M3 Cg तानि (for नाग) —b) V3 D4.9-11 सारोहाणि (for सारोहाणां) —V3 om 1c-2 —c) Ś V1.2 D1.4.11.12 अपि, D1-11 G1 M3 स्वपि (for चापि) B1 -कल्पाना (for -वर्णानां) —d) B1 ध्वजानां च, D12 दिव्याना च (for सध्वजानां) Ś N V1.2 B D1-4.8.10.11.12 वरूथिनां, G3 सवाजिनां (for सहस्रशः)

2 V1 om 2 (cf v l 1) D6.11 om (hapl ?) 2ab —a) Ś D6.11 पदातीनां (for राक्षसानां) —b) D1 पदा (for गदा) —c) N1 V1.2 B2.3 -धर्माणां (metri causa), N2 -वर्णानां, B4 -धर्माणि, D5 चित्राणि (for चित्राणां) —d) D4 T1.2 वामूणां (for शूराणां) —For 2cd, Ś B1 D1-4.8.11.12 subst

1852* अतीव भीमरूपाणां काञ्चनध्वजवर्मिणाम् ।

[D4.10 सुघोरा (for अतीव) D12 वेगानां (for रूपाणां) D1-4.12 वर्माणां (for वर्मिणाम्) ]

3 a) D4 (marg also) निश्चितैश्च (for निहतानि) B4 D14 शिवैर् (for शरैस्) N1 दिव्यैस्, N2 V B D2-3.4.8-11 दीप्तैस् (for तीक्ष्णैस्) —b) D4 भूषितै (for भूषणैः) —c) D6.11 प्रयुक्तानि G1 नियुक्तानि (for प्रयुक्तानि) Ś D6.12 राघवेण समस्तानि (Ś1 तदस्त्राणि) —After 3, N V B2-4 ins

1853* त्रिशिरो निहतो वीर महादी च निशाचर ।
विमर्दन कुम्भहनु खाकेतुश्च राक्षस ।
विकटाक्षो हयग्रीव शङ्कुकर्ण प्रमर्दन ।
हस्तिकर्णो महावीरो दर्शते नायका हता ।

[V2 om | 1 —(l 2) B4 -कर्ण (for हनु). —(l 3) N2 B1.4 प्रतर्दन (for प्रमर्दन) ]

4 a) D4 (before corr as in text after corr *inf. lin.*) छित्वाथ (sic) (for श्रुत्वा च) Ś D6.12 सत्रस्ता (for संभ्रान्ता) N2 ते दृष्ट्वा ताश्च संभ्रान्ता —b) B2 reads निशाचरा in marg —V3 om 4cd —cd) N1 V1 B D1.2.3.10 राक्षसाश्च (D13 °स्ते) M3 Cv R राक्षसीश्च, Cr m k t as in text (for राक्षस्यश्च) D1 समागत्य, Cm राक्षस्यश्चेति पाठ, Cg राक्षसी राक्षसस्त्रिय —D5 repeats 4d erroneously after 5c. D9 reads 5d for the first time in place of 4d, repeating it in its proper place D8 reads चिन्तापरिप्लुता in marg D13 शोक (for चिन्ता) N V1.2 B D1-4.13 परायणा (for परिप्लुता) Ś D6.12 राक्षस्य बहुवस्त्रश्च दीनाश्चिन्ताविवर्जिता इव

5 a) D11 परिशोषव बांधवान् —c) D4 राक्षसै, D11 सहसागत्य (for सह संगम्य) Ś N V B D1-4.8.11.12 राक्षसै सह दुःखार्ता —After 5c, D4 erroneously repeats 4d. D9 reads 5d for the first time in place of 4d, repeating it here —d) Ś N V2.3 B1.2.4 D1-4.8.11.12 समार्ता, V1 B3 सहार्ता, M3 भर्तारं (for दुःखार्ता) D1.4.11 पर्यपेदयन् (metr.).

कथं शूर्पणखा वृद्धा कराला निर्णतोदरी ।
आससाद वने रामं कन्दर्पमिव रूपिणम् ॥ ६
सुकुमारं महासत्त्वं सर्वभूतहिते रतम् ।
तं दृष्ट्वा लोकवध्या सा हीनरूपा प्रकामिता ॥ ७
कथं सर्वगुणैर्हीना गुणवन्तं महौजसम् ।
सुमुखं दुर्मुखी रामं कामयामास राक्षसी ॥ ८
जनस्यास्याल्पभाग्यत्वात्पलिनी श्वेतमूर्धजा ।
अकार्यमपहास्यं च सर्वलोकविगर्हितम् ॥ ९

राक्षसानां विनाशाय दूषणस्य खरस्य च ।
चकाराप्रतिरूपा सा राघवस्य प्रधर्षणम् ॥ १०
तन्निमित्तमिदं वैरं रावणेन कृतं महत् ।
वधाय नीता सा सीता दशग्रीवेण रक्षसा ॥ ११
न च सीतां दशग्रीवः प्राप्नोति जनकात्मजाम् ।
बद्धं बलवता वैरमक्षय्यं राघवेण ह ॥ १२
वैदेहीं प्रार्थयानं तं विराधं प्रेक्ष्य राक्षसम् ।
हतमेकेन रामेण पर्याप्तं तन्निदर्शनम् ॥ १३

G. 6 71 15
B. 6 94 13
L. 6 73 16

6 a) G1 M6 शूर्पण(M4 °न)खी D6 दुष्टा (for वृद्धा) —b) Ś Ñ1 D2 8 13 निम्नगोदरी, D13 निहुतो° (for निर्णतो°) D4 राक्षसी च महोदरी —c) D1-3 6 रणे (for वने) —d) B1 D1-5 7 9-11 13 G2 कंदर्पसम (for कन्दर्पमिव) Ñ V B2-4 कदर्पशरपीडिता

7 a) D13 मुक्त्वा हार (sic) (for सुकुमार) —b) B3 -सत्त्व (for भूत) —V2 damaged for c —c) Ñ V1 3 B लोकपालस्य, D4 °विध्या सा, D6 °वध्यात्मा, D9 °वद्य सा, D13 वध्यमाना सा; M3 °निंद्या सा Ck t as in text (for लोकवध्या सा) —d) B3 दीनरूपा, D7 रूपहीना (for हीनरूपा) Ñ1 G2 प्रकाशिता, D8 वयोतिगा (for प्रकामिता) Ś B1 D1-4 8 12 13 कथं राम(D8 चीर्णराशि)मकामयत् (D4 °मार्गाणि)

8 —b) D6 T2 3 महाबलं, M1 3 महायश (for महौजसम्) —V2 om 8c–9 —c) Ś D8 12 वीर (for राम)

9 V2 om 9 (cf v l 8) D13 om 9ab The sequence of st 9–16 in D13 is 14cd 11cd 14c 16 11ab 13 and 9cd (including omissions and star passages) —b) Ś D8 12 पलित, Ñ V1 2 B D1 4 6 9 T2 3 मलिना D7 10 11 T1 M3 Cm g k t वलिनी; G1 पलिनी, M6 कामिता (for पलिनी) ※ Cr पलिनी श्वेतमूर्धजेति पाठ ।, Cm g k t वलिनी । वलय अस्या सन्तीति वलिनी । वीचादित्वादिनि (Cg °नी । पामादित्वाल्लच् । आपा डीप्) ※ —c) D8 लोकानाम् (for अकार्यम्) Ś Ñ1 V1 3 B1 D1-4 8 12 अव, B3 इह, D13 एव (for अप) Ñ1 हास (for हास्य)

10 D13 om 10 —b) M4 रावणस्य (for दूषणस्य) —c) Ś1 V B1 2 D3 8 12 T2 3 Ck [अ]प्रतिरूपस्य, Ś2 [अ]प्रतिरू** (moth eaten) B3 °अ रूप (sic) D2 4 °रूपाय, D6 प्रतिरूपस्य M3 °रूप सा Cm g t as in text (for [अ]प्रतिरूपा सा) ※ Ct अप्रतिरूपस्य इति पाठे तदसदृशाकारस्येत्यर्थ ※ —d) D1 2 राघवाय (for राघवस्य) B4 सा रामधर्षणं

11 For sequence in D13 cf v l 9 V3 om 11ab. V2 mostly damaged for 11abc —a) Ś B1 D1-4 8 12 13 कृत (for इद) —b) G1 राघवेण (for रावणेन) Ś B1 D1-4 8 12 13 दशग्रीवेण रक्षसा, Ñ V1 B2-4 रावणस्य (Ñ2 राघवस्य, B3 राक्षसस्य) क्षयावह —c) Ś D2 8 12 सा हृता, Ñ2 V1 3 B2-4 D6 T2 3 [अ]पहृता, Ñ1 B1 D13 च(D3 चा) हृता (for नीता सा) D9-11 M3 transp नीता and सीता D3 4 स्ववधाय हृता सीता ※ Ct सा आनीतेति च्छेद ※ —d) Ś Ñ V B D1-4 6 8 12 13 T2 3 रावणेन दुरात्मना —After 11, Ś V2 B1 D1 2 4 6 8 12 T2 3 ins while Ñ1 ins after 12 Ñ2 D13 (only l 1) ins after 16 D3 cont after 1855*

1854* मारीचो दण्डकारण्ये शूरो राक्षसपुंगव ।
हतो विक्रम्य रामेण पर्याप्तं तन्निदर्शनम् ।

[ (l 1) D6 T2 3 हतो (for शूरो) —(l 2) Ñ2 हतो D6 T2 3 नीरो (for हतो) Ñ V2 B3 D4 8 transp विक्रम्य and रामेण D1 हतो रामेण युद्धेन (for the prior half) D4 न वातो रावणस्तन्न (for the post half) ]

12 D13 om 12 V3 B1 D1 2 transp 12–13 and 14–15 D3 reads 12ab and 13 after 15 —ab) G3 स (for न) Ś B1 D1-4 8 12 T2 3 प्राप्स्यते, Ct as in text (for प्राप्नोति) Ñ V B2 4 न च सीता दशग्रीव मनसापि हि (B3 च) कामयेत् —c) Ś D8 12 तत्तार्जितयता (for बद्धं बलवता) —d) Ś D8 12 रक्षसा, D6 अक्षम (for अक्षय्य) Ñ1 D3 तु B1 D4-7 9-11 T1 G M3 च D3 वै (for ह) Ñ1 V B1 4 T2 3 रावणेन तु (T2 3 च) M4 राघवे रणे (for राघवेण ह) D1 राघवेणापि च भृशं (unmetric) —After 12 Ñ1 ins 1854* while D2 ins

1855* बालेन ताडका नागसहस्रबलधारिणी ।
हता रामेण चैकेन पर्याप्तं तन्निदर्शनम् ।

—Thereafter D3 cont 1854*

13 For sequence in D13 cf v l 9 V3 B1 D1 2 transp 12–13 and 14–15 D3 reads 12ab and 13 after 15 V3 om 13ab. —a) Ś D1-3 4 8 12 T2 3 प्रार्थयान Ñ1 V1 2 B2-4 प्रार्थयत च(N1 वै, B3 4 तु), Ñ1 तु

G 6 74 16
B 6 94 14
L 6 73 13

चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
निहतानि जनस्थाने शरैरग्निशिखोपमैः ॥ १४

खरश्च निहतः संख्ये दूषणस्त्रिशिरास्तथा ।
शरैरादित्यसंकाशैः पर्याप्तं तन्निदर्शनम् ॥ १५

हतो योजनबाहुश्च कबन्धो रुधिराशनः ।
क्रोधार्तो विनदन्सोऽथ पर्याप्तं तन्निदर्शनम् ॥ १६

जघान बलिनं रामः सहस्रनयनात्मजम् ।
वालिनं मेघसंकाशं पर्याप्तं तन्निदर्शनम् ॥ १७

ऋश्यमूके वसञ्शैले दीनो भग्नमनोरथः ।
सुग्रीवः स्थापितो राज्ये पर्याप्तं तन्निदर्शनम् ॥ १८

धर्मार्थसहितं वाक्यं सर्वेषां रक्षसां हितम् ।
युक्तं विभीषणेनोक्तं मोहात्तस्य न रोचते ॥ १९

---

प्रार्थयत, D G L (ed) प्रार्थ्य (L (ed) °र्थं) मान तु (G त) Cr m k t as in text (for प्रार्थयान त) B प्रार्थयान तु वैदेहीं —$^d$) Ñ V B वी(B प्रे)क्ष्य सुदित, V वीक्ष्य राक्षस —$^e$) N V B क्रुद्धेन (for एकेन) D बाणेन (for रामेण) B हत रामेण क्रुद्धेन —For 13 D subst

1856* ततो रामेण विक्रम्य विराधो निहतो वने ।

—After 13 N B read 16

14 For sequence in D cf v l 9 Ś T om (hapl) 14–16 Ś D om (hapl) 14–15 V B D transp 12–13 and 14–15 V mostly damaged for $14^{ab}$ and om $14^c$–$15^b$ —$^c$) B निपातान (for निहतानि) ❀ Cg चतुर्दशेति श्लोक पर्याप्तं तन्निदर्शनमि त्यनुषज्यते। उत्तरश्लोकनैकवाक्यस्य शरपदद्वयस्यैयर्थ्यम् ❀

15 For sequence in D, cf v l 9 Ś D T om 15 V om $15^{ab}$ (for both, cf v l 14) V B D transp 12–13 and 14–15 —$^b$) D G transp दूषणस् and त्रिशिरास् V B हत, G तदा (for तथा) —B reads $15^{cd}$ twice (var) —$^c$) Ñ V B (first time) रामेण लोकरामेण, V ***** रामेण (damaged) B D T शरैराशीविषाकारैः, D भास्वीविषविषमस्यैः —After 15, D reads $12^{cd}$ and 13

16 For sequence in D cf v l 9 Ś T om 16 (cf v l 14) D om (hapl) 16–18 G om (hapl) 16–17 Ñ B read 16 after 13 —$^a$) V वतो (for हतो) —$^c$) D T G V Cm क्रोधाद्दे (for क्रोधार्तो वि) D घोरं (for सोऽथ). Ś Ñ V B D क्रोधावर (N D °वने, B D °बल) राघवास्य, N B G (ed) क्रौंचारने (B °चवासे, G (ed) °वारण्ये) राघवेण, V B क्रौंचारने (V °रे) च रामेण, D T क्रौंचे वने महावीर्यं —After 16, N D (only I) ins 1854* while D reads $19^a$

17 D G om 17 (cf v l 16) Ś om (hapl) 17–18 —$^{ab}$) D T वालिन। M बभूव (sic) (for जघान) G वानरो M वालिने (for बलिन) Ś D वानरं वालिनं हत्वा N बलिनं वालिन हत्वा Ñ V B वालिनं बलिनं हत्वा (V damaged from हत्वा up to $17^b$) (for $^a$) B G (ed) सहस्राक्षात्मजं हरि (G (ed) भुवि) (for $^b$) D वानरेंद्रो हतो वाली सहस्राक्षस्य चात्मज —B om $17^c$–18 —$^c$) Ś D M वलिन, D T जघान (for वालिन) T M मेरु (for मेघ) D रामेण वीर्यवता —$^d$) Ś D राघवेण महात्मना —For $17^{cd}$, Ñ V B subst

1857* राघवात् कपिशार्दूल महावीर्यं महौजसम् ।
[Ñ B हरि (for कपि)]

18 D om 18 (cf v l 16) Ś B om 18 (cf v l 17) D om (hapl) 18 —$^{ab}$) N MSS ऋष्यमूक here and elsewhere Ś D च शैलेंद्रः Ñ V D वसश्चैव T वस**(damaged) (for वसञ्शैले) B transp शैले and दीनो —$^c$) N V B D G प्रापितो राज्य (for स्थापितो राज्ये) Ś D सुग्रीव-स्थापित राज्ये —After 18 L (ed) ins

1858* एको वायुसुतः प्राप्य लङ्कां हत्वा च राक्षसान् ।
दग्ध्वा तां च पुनर्यातः पर्याप्तं तन्निदर्शनम् ।
निगृह्य सागरं तस्मिन्सेतुं बद्धा सुवानरम् ।
कुम्भेऽतरत्स सग्राम पर्याप्तं तन्निदर्शनम् ।

19 N om 19 D reads $19^a$ after 16 V om $19^c$–$23^b$ —$^{cd}$) B दुर्क्ष (for युक्त) Ś (यु)क्त B (भ)क्ष (for (उ)क्त) D विभीषण स्थाने D M मोहं (for मोहात्) G M तव (for तस्य) Ñ V B नास्य मोहादरोचत (B °चत्), B मोहादेव न रोचयत् (for $^d$) D विभीषणनेकश्रुतं राजानं चापि न श्रुत. ❀ Cv न रोचते नारोचत। व्यत्यये भूत लट् ❀

20 V om 20 (cf v l 19) D om $20^{cd}$. —$^b$) D श्रुत्वा (for कुर्याद्) —$^d$) Ś यदि स Ñ V B यद्येव B यद्यपि, D यद्यपि D प्रययौ (for यदि स) —After $20^{cd}$ Ñ V B ins.

1859* रावणो रक्षसां भीमस्ततो नो न क्षमो भवत् ।
एकेन वानरेणेयं पुरी लङ्का प्रधर्षिता ।
अक्षः कुमारो निहतः सह सैन्यानुगास्तथा ।
अमात्यपुत्रा निहताः किंकराश्च निशाचराः
दग्धा च नगरी लङ्का पर्याप्तं तन्निदर्शनम् (5)
यदा च वानरैर्घोरैः सन्नुद्धो दर्पितैः ।
रुद्धा च नगरी लङ्का पर्याप्तं तन्निदर्शनम् ।
सुहृदां वचनं कुर्याद्यदि वा प्रतिभा क्षया ।

विभीषणवचः कुर्याद्यदि स धनदानुजः ।
श्मशानभूता दुःखार्ता नेयं लङ्कापुरी भवेत् ॥ २०

कुम्भकर्णं हतं श्रुत्वा राघवेण महाबलम् ।
प्रियं चेन्द्रजितं पुत्रं रावणो नावबुध्यते ॥ २१

मम पुत्रो मम भ्राता मम भर्ता रणे हतः ।
इत्येवं श्रूयते शब्दो राक्षसानां कुले कुले ॥ २२

रथाश्वाश्वाश्च नागाश्च हताः शतसहस्रशः ।
रणे रामेण शूरेण राक्षसाश्च पदातयः ॥ २३

रुद्रो वा यदि वा विष्णुर्महेन्द्रो वा शतक्रतुः ।
हन्ति नो रामरूपेण यदि वा स्वयमन्तकः ॥ २४

हतप्रवीरा रामेण निराशा जीविते वयम् ।
अपश्यन्त्यो भयस्यान्तमनाथा विलपामहे ॥ २५

रामहस्ताद्दशग्रीवः शूरो दत्तवरो युधि ।
इदं भयं महाघोरमुत्पन्नं नावबुध्यते ॥ २६

न देवा न च गन्धर्वा न पिशाचा न राक्षसाः ।
उपसृष्टं परित्रातुं शक्ता रामेण संयुगे ॥ २७

G 6 74 30
B. 6 94 27
L. 6 73 28

[ (l 1) V2 B4 ततो लोक , B3 तदा किं न (for ततो नो न) —B3 reads in marg from प्रघर्षिता in l 2 up to prior half of l 5 —(l 3) V1 पच (for सह) —V1 om (hapl) l 6–7 —(l 6) V2 च स्वगरे (for महोदरी) —(l 7) B2 3 यथा (for सदा) ]

—d) D7 G1 2 [ए]व (for [इ]य) D9 विनश्यति, D10 11 भविष्यति (for पुरी भवेत्)

21 V3 om 21 (cf v l 19) —a) B1 दृष्ट्वा (for श्रुत्वा) —b) Ś Ñ V1 2 B D1–4 6 8 12 13 T1 2 महात्मना (for महाबलम्) —After 21ab, D6–7 9–11 S ins

1860* अतिकाय च दुर्धर्षं लक्ष्मणेन हतं तथा ।

[ D9 11 दुर्मर्षं (for दुर्धर्षं) D6 7 9–11 तदा, M3 पुनः, M5 तत्र (for तथा) D6 T1 G3 निपातितं, M1 2 तथा हतं (by transp ) (for हतं तथा) ]

—c) Ś D4 8 12 इंद्रजितं —d) Ś B1 D1–3 5 12 13 नानुशोचते (D1 13 °ति) T1 G3 4 नैव बुध्यते, Cm g t as in text (for नावबुध्यते) Ñ V1 2 B2–4 शोचता (V1 °चिता, B2 4 °चते) च न (B3 स, B4 om [subm ]) रावणः —After 21 Ñ V1 2 B2–4 ins

1861* तत सरक्तनयना सततास्रुनिपातनात् ।
अभूतपूर्वव्यसना राक्षस्य पर्यदेवयन् ।

[ (l 1) Ñ2 B2 4 निपातना —(l 2) N V1 B4 परिदेवयन् ]

while D7 (l 1 only) K (ed ) ins

1862* पुरा हनुमता लङ्का दग्धा लाङ्गूलवह्निना ।
हतमक्षकुमारं च दृष्ट्वासौ नावबुध्यते ।

[ (l 1) D7 लङ्का दग्धा (for लङ्का दग्धा) ]

22 V3 om 22 (cf v l 19) —b) Ś N V1 2 B1–4 D1–3 7 8 12 G1 हतो रणे (by transp ) D4 हतो युधि (for रणे हतः) —c) Ś1 D1 [ए]व, D6 9–11 T G3 4 M5 [ए]व (for [इ]वं) B2 4 शुश्रुवे (for श्रूयते) —d) Ñ V1 2 B2 4 D1–3 7 9–11 M1 2 राक्षसीनां (for राक्षसानां) Ś Ñ V2 3 B D1 4 8 9 11 13 गृहे गृहे (for कुले कुले)

23 V3 om 23ab (cf v l 19) —a) B1 D13 अश्वाश्च, G (ed ) साश्वाश्च (for चाश्वाश्च) Ñ1 रथायुधाश्च Ś B1 D1 3 8 13 रथा नागास्तथाश्वाश्च, D1 4 रथा नागा हताश्वा (D4 °ताः श्व )श्वा, D9 11 रथाश्वनागाश्च हताः —b) Ñ2 V1 2 हता शत , D9–11 तत्र तत्र (for हता शत ) —c) D13 वीरेण (for शूरेण) —d) V3 D9–11 हताश्चापि (for राक्षसाश्च) B1 महाबला (for पदातय )

24 b) B1 D1 [ऽ]थ (for वा) —d) D2 च (for वा) Ñ V B3 4 कालो वा युद्ध (B4 वायुर्दु )रासद

25 a) B2 4 D6 G1 हता , Cr g as in text (for हत ) B1 D11 हताश्च वीरा, D6 हता वीराश्च Ś Ñ V B D1–4 8 12 13 बहवो (for रामेण) —c) N V B2 4 D6 7 9–11 T1 2 G1 M6 Cr m g t अपश्यतो Ś B1 D1–3 8 12 13 व्यसनान्तमपश्यन्तो (D1 °न्त्यो), D4 व्यसनान्तं न पश्यामो, ॐ Cr m t अपश्यन्त अपश्यन्त्य , Cg वयमित्येतदपेक्षया अपश्यन्न इति पुँल्लिङ्गम् ॐ —d) Ś B1 D1 3 4 8 12 13 ह्यनाथा, D8 विनाथा, D6 T1 G1 2 M5 निराशा (for अनाथा) ॐ Cg विलपामहे इत्यात्मनेपदमार्षम् ॐ

26 a) Ś B1 D1–3 8 12 राघवास्त्र, Ñ V B3–4 महाणो हि, D4 स राघवाद्, D13 राघव तु (for रामहस्ताद्) —b) Ś Ñ V1 2 B2 3 4 D1 4 8 12 लब्ध , B2 सर्वे (for दत्त ) Ś B1 D1–4 8 12 पराक्रम , N V1 2 B2 D6–7 9–11 T G2 3 M3 5 महावर , V3 B4 महाबल , B3 वरो महान्, G1 महारथ (for वरो युधि) D13 प्राणान्तकरमक्षय —c) N2 इत्थ (for इद ) Ś D8 12 इम क्षय (for इद भय) Ñ V B3–4 महद्भय, B1 D2 4 12 महाभय (by transp ), D7 भय महद् (for भयं महा ) —d) Ś Ñ V B D1 4 8–12 T2 3 G1 2 M6 समुपस्थ न बुध्यते

27 V3 om 27ab —ab) Ś Ñ V1 2 B D1–4 8 12 T2 3 G2 त न (Ś D13 तत्र, N3 V2 य न) देवा न G1 न च देवा न (by transp ) M5 न देवा नापि, Cr as in text (for न देवा न च) Ñ V1 2 B2 4 नासुरोरग , B3 नासुरा न च D2 पिशाचा न च (for न पिशाचा न) D13 त च देवाश्च गन्धर्वा पन्नगा यक्षराक्षसाः —c) B2 उपसृष्टा, B4 °सृष्टा, D7 °दिष्ट D3 °सृज्य, D8 °विष्ट (sic) D8 T2 3

ददर्श मातरं तत्र निर्मलां जाह्नवीमिव ।
सवीतशुक्लवसनां हृसगद्गद्भाषिणीम् । [30]
वरासनगतां देवीं भूषणैरुपशोभिताम् ।
सर्वलक्षणसंपूर्णां जननीमवलोक्य ताम् ।
पादयोर्न्यपतद्धाच्छिन्नमूल इव द्रुमः ।
उद्धृत्य बाहू विपुलौ धर्मात्मा स विभीषणः ।
तमार्तरूपं दृष्ट्वैव कैकसी जातविस्मया । [35]
स्वाङ्कमारोपयामास विक्लवन्तमचेतनम् ।
मूर्ध्नि चैनमुपाघ्राय इदमाह शुचिस्मिता ।
किमर्थं रुद नरश्रेष्ठ पूर्णचन्द्रनिभानन ।
पद्मपत्रविशालाक्ष गजविक्रान्तगामिक ।
दुन्दुभिस्वननिर्घोष मत्तवारणवारण । [40]
धर्मात्मज्ञ महाप्राज्ञ केनासि त्वं विमानितः ।
ब्रूहि धर्मसमाचार पितुर्वृत्तवले स्थितः ।
पद्मयोनिकुले जातः स त्वं केनासि दुर्मनाः ।
ब्रूहि कार्यं विशालाक्ष भय कस्मादुपागतम् ।
महेश्वरात्सर्वविष्णोर्वा इन्द्राद्वापि पितामहात् । [45]
प्रेतराजाधिपाद्वापि कुबेराद्वापि बुद्धिमन् ।
सर्वदेवसमूहाद्वा सर्वमाख्यातुमर्हसि ।
अथवा कोसलेन्द्राद्वा रामाख्यविशारदात् ।
यस्यानीता च सा देवी सीता सुरसुतोपमा ।

एवमुक्तः स मात्रा तु राक्षसेन्द्रो विभीषणः । [50]
आख्यातुमुपचक्राम यथावृत्तं तु राक्षसात् ।
भयगद्गदया वाचा ह्रिया किंचिदधोमुखः ।
संस्तभ्य च तथात्मानं धैर्यबुद्ध्या निवेद्य च ।
पञ्चेन्द्रियग्रहैर्युक्तं संस्तभ्य मनसा गिरम् ।
स वक्तुमुपचक्राम जनन्यै सुव्रत वचः । [55]
शृणु मातर्यथा वाच्यं यद्वाक्यं हितनिष्ठुरम् ।
रावणस्य महाभागे मन्त्रकालविनिर्णये ।
उक्तः स तु मया देवी यथा सीता प्रदीयताम् ।
पादौ तस्याथ संगृह्य यथावदभिवाद्य च ।
रामेण तु महाबाहो न वैरं कर्तुमर्हसि । [60]
अन्यच्च शृणु मे राजन्यथा वक्ष्यामि सुव्रत ।
मारीचो येन निहतः कबन्धश्च महाबलः ।
विराधश्च महातेजाः खरश्च सगणो हतः ।
वाली येन हतो वीरः सप्त तालाश्च भेदिताः ।
विरूपा च कृता येन भगिनी रावणस्य सा । [65]
एवंविधानि कार्याणि श्रूयन्ते यस्य रावण ।
तस्य मुञ्च महाबाहो पत्नीं रामस्य धीमतः ।
एवमुक्तो मया देवि क्रोधेन कलुषीकृतः ।
धिग्धिगित्येवमुक्त्वा मां निर्भर्त्स्य च पुनः पुनः ।
ताडितोऽस्मि सभामध्ये पादेनाशनिवर्चसा । [70]

---

मता, D5 मातर स ददर्शाथ (for the prior half). —(l. 30) D5.1 शुक्लसंवीतवसनां हसशुक्लशिरोरुहां (D4 सगद्गदप्रभाषिणीं). —(l. 32) L (ed.) क्षपयो (for -संपूर्णां). —After the prior half of l. 32, D5 ins.:

3* सावित्रीमिव रूपिणीम् ।
चिन्तयन्तीं तमेवार्थं राघवित्रस्तबुवन् ।
ईषच्छ्यामवदनां विपश्यामिव पश्चिनीम् ।
एव शुणवशकीर्णां.

D5 अवलोकयन्. —(l. 34) D5 विपुलौ बाहू (by transp.). D5 उत्क्षिप्य बाहू विलपन् (for the prior half). —(l. 35) Ś1 दृष्ट्वा वै. Ś2 D3.4 कैकसी (here and below) D5 -स्मया (for -विस्मया). —(l. 36) D5 अङ्कम् (for स्वाङ्कम्). Ś1 विचेतन (for अचेतनम्). —(l. 37) D5 शुचिस्मिता (for शुचिस्मिता). —(l. 38) D5 रौषि (for पूर्ण-). D5 विनयि- (for रुद नर-) and रोहिणीश- (for पूर्णचन्द्र-). —(l. 39) D1.3 om. (hapl.) from the post. half up to the prior half of l. 44. L (ed.) विक्रम- (for -विक्रान्त-). D3.4 मत्त-मातङ्गसदृशे (for the post. half). —(l. 41) D5 निवारित. (for विमानितः). —(l. 42) D5 कार्य, L (ed.) कल्प- (for धर्म-). —(l. 43) D1.2 पद्मयोने कुलस्य त्वं (for the prior half). D3.4 केना (for स त्व). —(l. 45) Note hiatus between the two halves. D5 माहेश्वराद्. Ś1 D1.2 वा विष्णोर्; D5 विष्णोर् (subm.) (for सर्वविष्णोर्). L (ed.) दैत्येद्वा (for इन्द्राद्वापि). D5 महाबल. —(l. 46) Ś D1.2 बुद्धिमान्; D5 बुद्धित (for बुद्धिमन्). —After l. 46, D5 ins.:

4* यक्षगन्धर्वरक्षोभ्यो पूर्ववैरचिकीर्षया ।

—(l. 48) D5 हि (for वा). —(l. 49) D5 यमानीता. D5 यत्र (for च सा). —(l. 50) Ś1 तु (for स). L (ed.) स (for तु). D3.4 राक्षसेशो. —(l. 51) D1 राक्षस, D5 रक्षसा, L (ed.) राक्षसीं (for राक्षसात्). —(l. 52) L (ed.) भयाद् (for भय-). D3.4 अवाङ्मुखः (for अधोमुखः). —(l. 53) D5 तदा (for तथा). Ś1 D1.2 L (ed.) धैर्यं बुद्ध्या (L (ed.) °द्धौ) निवेश्य च, D3.4 धैर्येण वि (D5 °र्यं बुद्धि) निवेश्य च (for the post. half). —Ś D1.2 om. l. 54. —(l. 54) L (ed.) पञ्चेन्द्रियग्र (°म) हे युक्त (°क्तः) (for the prior half). D5 पञ्चेन्द्रियग्रहयुक्त संस्तभ्य मनसागम (unmetric). —(l. 55) D5 प्रवक्तुम्. D5 L (ed.) जनन्यावि (L (ed.) °न्यैवि) तथ वचः (for the post. half). —(l. 56) Ś2 D1.2 मया (for यथा). D5 शृणुष्वावहिता त्वं च्छमया कुरुक्षित (subm.). D4 L (ed.) शृणु मातर्मयावेद (L (ed.) °दम) च्छमया दुरधि (L (ed.) °रु)-ष्ठित. —(l. 57) L (ed.) महाभागैर् (for °भागे). —(l. 58) D1.2 देवि (for देवी). —(l. 59) D5 अगत्वा स्त्री परित्यज्य सहेदणावत्तुल. —After l. 60, D5 ins.:

5* विशालो बलवीर्येण यशसाप्रतिमेन च ।
निरर्थकं वैरमिदं न त्वं कर्तुमिहार्हसि ।

—(l. 61) D5 तथ (for अन्यच्च). D1.2 यत्ते (for यथा). —(l. 62) D5 निहतो येन (by transp.). —(l. 63) Ś1 D1.2 गतः (for हतः). —For l. 64–65, D1.2 subst.:

6* वाली येकेन बाणेन प्रेषितो यमसादनम् ।
तस्य धर्मविधान त्वं मुञ्च मद्वचनात्प्रभो ।
((l. 2) D5 विभो (for प्रभो).)

—(l. 66) D3.4 कर्माणि (for कार्याणि). —(l. 70) D5 पदा

पुनश्चोक्तोऽस्मि तेनात्र गच्छ गच्छेति मा चिरम् ।
भ्रष्ट निर्लज्ज नीचेति ध्रुवं निन्ये यमक्षयम् ।
शत्रुणा प्रहितो नूनं शत्रुपक्षप्रशंसकः ।
रामस्यानुगतं भक्तं न त्वां द्रष्टुमिहोत्सहे ।
एवमुक्तोऽस्मि परुषं रावणेन शुभानने । [75]
राममेवानुगच्छामि त्वां तु द्रष्टुमिहागतः ।
यदि मे दुरनुक्रान्तं यदि वा दुरनुष्ठितम् ।
यदि दुश्चरितं मन्ये ततो गृह्य प्रशाधि माम् ।
एवमुक्ता तदा तेन माता तस्य महात्मनः ।
नाशकद्वापितुं सुभ्रूर्मूर्छमयीव व्यवस्थिता । [80]
ततः संज्ञामुपागम्य मुहूर्तादिव भामिनी ।
उवाच रुदती वाक्यं बिभीषणमिदं तदा ।
एवमेतन्महाबाहो यथा वदसि पुत्रक ।
विद्धि नूनं विनाशं च सर्वेषां समुपस्थितम् ।
स्मारितास्मीह वचनं पुत्र तद्विपुलं त्वया । [85]
ब्रह्मणश्च महाबाहो तच्छृणुष्व समाहितः ।
दशग्रीवप्रभृतिषु जातेषु कुलनन्दन ।
निर्जितेषु च देवेषु सशक्रेषु महात्मसु ।
चिन्तयन्ती कुलस्याहं पुत्र वंशकरं शुभम् ।
तपस्विनस्तव पितुर्गताश्रमपदं ह्यहम् । [90]
स्थितास्मि पुरतो वत्स तव पित्रे महात्मने ।
वक्तुकामा विशालाक्ष पितरं ते तपस्विनम् ।
ततो मां स्थितां दृष्ट्वा पुरस्तादृषिसत्तमः ।
उवाच मधुरं वाक्यं हर्षगद्गदया गिरा ।
किमागमनकृत्यं ते ब्रूहि सत्येन शोभने । [95]
एवमुक्तास्मि मुनिना पुत्र बुद्धिमतां वर ।
ततोऽहं वक्तुमारब्धा प्राञ्जलिः प्रणिपत्य तम् ।
आगतास्मि महाभाग सशयच्छेदनाय वै ।
तव वाक्येन ये जाताः पुत्रा मम महाव्रत ।
स्वं राज्यं विपुलं प्राप्ता लब्ध्वा पैतामहं पदम् । [100]
किंचिच्चिन्तास्ति संभूता दृष्ट्वा पुत्रं महाबलम् ।
अवध्यं वरदानेन सर्वैरपि दिवौकसैः ।
यक्षगन्धर्वनागैश्च पिशाचैर्ऋषिभिस्तथा ।
एवंविधेषु पुत्रेषु जातेषु तव सुव्रत ।
को नु वंशकरो ब्रह्मंस्तव पुत्रो भविष्यति । [105]
कथे मां स महाबुद्धिः काले धर्मभृतां वरः ।
दुराचारशतयुतो राज्ये स्थास्यति रावण ।
कनिष्ठश्चापि धर्मात्मा पुत्रो वंशधरस्तव ।
राज्ये स्थास्यति धर्मेण यावद्भूमिर्धरिष्यति ।
पुनरुक्तः स तु मुनिर्मया पुत्र प्रणम्य वै । [110]
उवाच वचनं धीमान्सर्वज्ञो भगवानृषिः ।
शृणु केकसि यद्वृत्तं ब्रह्मणः सदने शुभे ।
देवानां संनिधौ भद्रे ऋषीणां च समागमे ।
यक्षकिंपुरुषाणां च पितॄणां वामलोचने ।
गन्धर्वाणां सनागानां पिशाचानां तथैव च । [115]
श्रेष्ठानां देवयोनीनां संनिधौ यन्मया श्रुतम् ।

7* सर्वदोषविनिर्मुक्तं परमेष्ठिसमं मुनिम् ।
ध्यानयोगसमायुक्तमाश्रमस्थं महामुनिम् ।

8* एवमुक्तो महर्षिर्मां समोवाचेति रावण ।

तेन (for समागमे). —D4 om. from the post. half up to the prior half of l. 71. —(l. 71) D3 भरस्यानाद; L (ed.) [अ]ह तेन (for तेनात्र). L (ed.) तत्र (for first गच्छ). —D1 om. l. 72. —(l. 72) D3 भ्रष्ट (for भ्रष्ट). D1 न त्वां; L (ed.) न त्वा (for ध्रुव). —(l. 73) D4 शत्रुणा हि (hypm.). —(l. 74) Ś1 D12 राम चानुगत रक्त, D3 रामानुरागरक्त च; D4 रामे सानुरागसक्त (for the prior half). —(l. 75) D3 पारुष्य (for परुष). —(l. 76) D12 [त्व]स्त्वहे (for [आ]गत). —(l. 77) D3.4 वा दुरति- (for मे दुरनु-) and दुरधि- (for दुरनु-). —(l. 78) D3.4 मन्ये; D13 मेव (for मन्ये). —(l. 79) Ś1 D1 एवमुक्त्वा. —(l. 80) D1 स्थिता तदा (for व्यवस्थिता). D3 मूर्छेनेवास्थिता तदा (for the post. half). —(l. 81) D3 चैव (for इव). —(l. 82) D3 सास्त्र (for रुदती). —(l. 84) D2 विद्धिनूं (D4 क्षयो नू)न विशालाक्ष (for the prior half). D3.4 स्युपस्थित°. —(l. 85) D3.1 नास्मि (for [अ]स्मीह). D1 ते (for तद्). Ś1 D4.12 यशः (for त्वया). D1 पितुस्ते विपुलौजसः (for the post. half). —(l. 86) D3 महर्षेः शृ°, D1 ब्रह्मणस्तु. —(l. 88) D4 om. (hapl.) च देवेषु. D3.4 महात्मवे (for महात्मसु). —(l. 89) D3.4 पुत्र. D1 वंशधर; L (ed.) वंशकरं, D3.4 शुभ (for शुभम्). —(l. 90) Ś1 तपस्विन च पुत्र ते, Ś2 D12 तपस्विने च पित्रे ते (for the prior half). D1 गत्वा (for गता). D3 तथा, D12 गृह (for ह्यहम्). —(l. 91) D4 स्थितास्मि महात्मने (for the post. half). —After l. 92, D3.4 ins.:

—(l. 93) D3 स्थितो (for स्थितां). —(l. 96) D1 ऋषिणा (with hiatus) (for मुनिना). D3.4 बुद्धिमता वरा (for °मतां वर). —(l. 100) D4.12 स्व (for स्वं). D1 प्राप्त. D4 लब्ध (for लब्ध्वा). D3 लब्ध तस्य महाफल (for the post. half). —(l. 101) D4 पुत्र दृष्ट्वा (by transp.). D3 दिवृधा चास्ति सम्भूतान्दृष्ट्वा पुत्रान्महाबलान्. —(l. 102) D3 अवध्यान् (for अवध्यं). —(l. 105) D3 नो (for नु). L (ed.) वंशधरो. D4 वद (for तव). —After l. 105, D4 ins.:

—(l. 106) D3 किं तु वक्ष्ये महाबुद्धे काले शस्त्रभृतां वरः; D4 स्थित च महाबाहो काल धर्मभृतां वर. —(l. 108) D3 कनिष्ठस्तु; D4 कतमस्तु (for कनिष्ठस्). D3.4 वंशकरस् (for °धरस्). —(l. 110) D4 एवम् and च (for पुनर् and तु respy.). D3 एवमुक्तस्तु मतिमान् (for the prior half). D1 हि (for वै). —(l. 111) D3.4 बुद्धिमान्वर (D1 °नृषिः) (for भगवानृषि°). —(l. 114) After पितॄणां, D13 erroneously repeats from च समागमे in l. 113 up to पितॄणां in l. 114. D3 पितॄणां च विशालाक्षि यक्षकिंपुरुषेष्वपि, D4 पितॄणां चापि यक्षाणां किंनराणां च शोभने. —Ś1 om. l. 115. —(l. 115) Ś2 सुनागानां (for स°). —(l. 116) D3.1 मयानां (for मेहानां).

ततोऽहं संप्रवक्ष्यामि परमेष्ठिवचस्तदा ।
रावणेन जितो भद्रे शक्रः सुरगणैः सह ।
तन्मे हृत महाराज्यं हृत्वा दिव्यमिवाहितम् ।
रावणेन च निर्जित्य बद्ध्वा नीतोऽस्मि स्वां पुरीम् । [ 120 ]
विमुक्तस्तव वाक्येन निर्लज्जः पुनरागतः ।
त्रिदशेषु महाबाहो राज्यकामो ह्यहं तव ।
एतत्ते कथितं सर्वं मम दुःखं तव प्रभो ।
त्वं प्रमाणं महाबुद्धे यत्तच्छ्रेयस्तदुच्यताम् ।
एवमुक्तस्तदा ब्रह्मा कौशिकेन महात्मना । [ 125 ]
उवाच वचनं सूक्ष्मं सर्वलोकहितं तदा ।
काले सुरगुरुर्ब्रह्मा कौशिकाख्याय शृण्वते ।
शृणु कौशिक भद्रं ते यथा वक्ष्यामि सुव्रत ।
सर्वं श्रुतं मया शक्र तव संग्रामकारणम् ।
निर्जितश्चासि संग्रामे तच्च मे विदितं तव । [ 130 ]
प्राप्तोऽसि दुष्टदुर्मेधा रावणो लोकरावणः ।
कृतान्तपाशासिधरश्चण्डस्तीक्ष्णतरो ध्रुवम् ।
वरदानमदोत्सिक्तो दुर्धर्षो रावणो मम ।
तं गच्छत मया सार्धं विष्णुममितौजसम् ।
शङ्खचक्रगदापाणिं वरचन्दनभूषितम् । [ 135 ]
चापधरं देवं वीरं श्रीवत्सकाञ्छनम् ।
कौस्तुभोद्भासिततनुं श्रिया व्यमनुत्तमम् ।
अतसीपुष्पसंकाशं पीतवाससमच्युतम् ।
गरुत्मत्पृष्ठमासीनं पुण्डरीकनिभेक्षणम् ।
देवदेवं महाभागं विष्णुं ह्यभयमव्ययम् । [ 140 ]
योगसांख्योपनिषदैर्वेदैश्च समभिष्टुतम् ।
पुरुषं परमं विष्णुमनन्तं सर्वतोमुखम् ।
धर्मसेतुप्रवक्तारं सुराणां च हिते रतम् ।
तं गच्छाम वयं देवं सर्वदेवनमस्कृतम् ।
यद्विधास्यति नो नाथस्तत्कार्यमविशङ्कया । [ 145 ]
एवमुक्ताः सुराः सर्वे बभूवुरमितौजसः ।
विमानैः सूर्यसंकाशैर्हंसबर्हिणवाहिभिः ।
ब्रह्माणमग्रतः कृत्वा गतास्ते क्षीरसागरम् ।
आस्थिता एकदेशं तु समे भूमितले तदा ।
तपस्युग्रे महात्मानं योजयन्तस्तदा सुराः । [ 150 ]
आत्मानं ते महात्मानं देवदेवं दिदृक्षवः ।
गतेऽनेकशते काले वागुवाचाशरीरिणी ।
दुन्दुभिस्वननिर्घोषा हर्षयन्ती दिवौकसः ।
उत्तिष्ठ भगवन्विष्णो कुरु कार्यं महाबल ।

—(l. 117) D1 यथा (for तदा). D1 परम च वचस्तथा (for the post. half). —After l. 118, D1 ins.:

9* जगाम ब्रह्मसदनं शरणं शरणैषिणः ।
निपत्य पादयोस्तस्य देवदेवस्य धीमतः ।
निर्जितस्तव पौत्रेण प्राण भद्र प्रदर्शय ।
मेषदैवेषु यज्ञेषु सर्वैः सुरगणैः सह ।
स्वयासि स्थापितो राज्ये देवानां प्रपितामह ॥ [ 5 ]

whereas D4 ins.:

10* आगत्य ब्रह्मसदनं शार्वे प्रणतो यतः ।
भगवंस्त्वत्प्रसादेन वरमास चतुरानन ।

—After l. 118, L (ed.) reads a damaged line. —(l. 119) D1 रत्नम् (for निरत्नम्). D1 कराद्दिष (for स्वाहितम्). —(l. 120) D1.4 L (ed.) नि(L [ed.] मु)निर्जित्य. D1 निजां (for ऽस्मि स्वां). —(l. 121) D4 मुक्तोऽस्मि (for विमुक्तस्). —(l. 122) D1 (S)स्थह (for ह्यह). D1.4 निभो, L (ed.) तदा. —(l. 123) D1.4 मम दुःसहं विभो (for the post. half). —(l. 124) D1 प्रमाण हे महाबुद्धिर् (for the prior half). D1.4 न; D11 तु (for तत्). —(l. 125) D1 ततो (for तदा). —Ś1 om. (hapl.) from the post. half up to the prior half of l. 127. Ś1 D11 वासवेन (for कौशिकेन). —(l. 126) D1 श्लक्ष्ण (for सूक्ष्म). D1.4 भूत- (for -लोक-). —D4 om. l. 127. —(l. 127) D1 धीरः (for ब्रह्मा). D1 कौशिकस्योपशृण्वतः (for the post. half). —(l. 128) D1.4 त्वां (for यथा). —(l. 129) Ś1 संग्रामकारक. —(l. 130) Ś1 D4 (अ)पि (for (अ)सि). D1 तत्त्व (for तच्च). L (ed.) तत (for तव). —(l. 131) D1 प्राप्तो हत. सुदुर्मेधा, D4 प्राप्तरिष्टो दशग्रीवो (for the prior half). —(l. 132) D1.4 कालपाशधरो (D4 °गत)श्चैव मृत्योरप्य-

तरो मत. —After l. 132, D1 ins.:

11* कालिनन्धर्ववक्षांश्च बाधते सुरदानवान् ।

—(l. 133) D1.4 कुलान्यन्यु ममापश्च (for the post. half). —(l. 134) D1.4 आगच्छ मे (D4 तद्गच्छामो) महाबाहो (for the prior half). —(l. 135) D1 वरं गुरुभूषण (for the post. half). —(l. 136) D1.4 वीर (for देव). Ś1 ग्र (for वीर) D1 श्रीवत्सकृतभूषण, D4 देव श्रीवत्सलक्षण (for the post. half). —(l. 137) D1 श्रिया नित्यम् (for श्रिया व्यम्). —After l. 138, Ś1 erroneously repeats l. 136. —(l. 139) D1 गरुड-; D4 गारुड (for गरुत्मत्-). —(l. 140) D1 परमम्; D4 प्रभवम्; L (ed.) निर्वृतम् (for ह्यभयम्). —(l. 141) Ś D11 योगि. Ś -सांख्य- (for -सांख्य-). D1 -(उ)पनिषदाद्. Ś D1.12 भिरद्भि (for वेदैश्च). —(l. 142) D1.4 विभुम् (for विष्णुम्). D1 सर्वपोरुष (for सर्वतोमुखम्). —(l. 143) D1 -भक्तारं (for -प्रवक्तारं). —(l. 144) D1.4 तद्गच्छाम (D4 त गच्छामो) हरिं देवं (for the prior half). D1 देव- (for सर्व-). —(l. 147) D4 वाहिभि (for -वाहिभिः). —(l. 149) D1 तत्र स्थिता तु ते सर्वे (for the prior half). —(l. 150) D1.4 महात्मानो (for महात्मानं). —D11 om. (hapl.) from the post. half up to the prior half of l. 151. D1 योजयेरन्; D4 जजपेरन् (for योजयन्तस्). —(l. 152) D1.4 ततो दश- (for गतेऽनेक-). —(l. 153) D1 -स्वर- (for -स्वन-). —After l. 153, D1 ins.:

12* सुराणां किमनुष्ठेयं ब्रह्म ब्रूहि महाप्रभ ।
एवमुक्त्वा वचनं श्रुत्वा ब्रह्मा वेदविदां वरः ।
उवाच वचनं धीमान्प्रहसन्स दिवौकसः ।

—(l. 154) D1 महाबल. —(l. 156) D1 दुर्गे (for

देवानां भयभीतानामभयं दातुमर्हसि ।                [155]
रावणं सगणं देव त्वं निषूदय दुर्मतिम् ।
मानुषं रूपमास्थाय जहि शत्रुं दुरासदम् ।
एवमस्त्विति धर्मात्मा जातो रघुषु वीर्यवान् ।
विभक्तात्मा चतुर्धा च देवश्चक्रगदाधरः ।
सर्वे ते त्रिदशा जाता वानरीषु महाबलाः ।                [160]
ऋक्षीषु च महात्मानो देवपुत्रा मदोत्कटाः ।
स एष नृपशार्दूलो जातो रावणनिग्रहे ।
कुलस्य च विनाशाय अस्माकं वत्स साम्प्रतम् ।
तव पित्रा च विज्ञप्तो वरास्थित्यै पितामहः ।
अस्माकं सन्ततिः कस्मादविच्छिन्ना भविष्यति ।                [165]
तत्र वंशधरः सम्यग्भविष्यति विभीषणः ।
नारायणात्प्राप्तराज्यो यावच्चन्द्रार्कभूमयः ।
श्रीरामवचनाच्चैव चिरजीवी भविष्यति ।
त्वं चैव ब्रह्मणा प्रोक्तो राजा लङ्केश्वरः प्रभुः ।
त्वं गच्छ रामं धर्मज्ञं लोकरामं महाबलम् ।                [170]
स ते प्राणांस्तथा राज्यं दास्यते रघुनन्दनः ।
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ।
तावल्लङ्केश्वरस्त्वं हि एतदेव मया श्रुतम् ।
तव पित्रा मुखोद्गीर्णं त्वत्स्नेहादुदितं मया ।
तद्गच्छ पुत्र भद्रं ते विजयायारिसूदन ।                [175]
करोतु स्वस्ति ते ब्रह्मा त्रिनेत्रश्च महेश्वरः ।
शङ्खचक्रगदापाणिः पुराणः पुरुषोत्तमः ।
अहं च स्वस्तिनिरता तव नित्यं महाबल ।
एवमुक्तस्तु धर्मात्मा मातरं पृच्छ्य च तां तदा ।
अभिवाद्य च धर्मेण उत्पपात स राक्षसः ।                [180]

7

After 6 11 1*, Ñ2 V1 2 (l 1-4 only) B D5 ins

क्रोधसंरक्तनयनं ससंध्यमिव तोयदम् ।
भुजगकुटिलां रोषाद्भ्रुकुटीं भृशदारुणाम् ।
कृत्वासीनं प्रपश्यन्तं प्रासादस्थममर्षणम् ।
अभिवाद्य ततो भूयः श्रोत्रपर्याकुलेक्षणः ।
चतुर्भिः सचिवैः सार्धं निश्चक्राम विभीषणः ।                [5]
स मातरं पुनर्दृष्ट्वा सर्वमेव निवेद्य तत् ।
जगामाकाशमाविश्य कैलासं पर्वतोत्तमम् ।
यत्र वैश्रवणो राजा तिष्ठत्यमितविक्रमः ।
गुह्यकैर्बहुभिः सार्धं यक्षैश्चैव महाबलैः ।
अथाजगाम धर्मात्मा लोकानामीश्वरः प्रभुः ।                [10]
ततः सभायां देवस्य राज्ञो वैश्रवणस्य सः ।
धनाध्यक्षसभां देवः प्राप्तो हि वृषभध्वजः ।
उमासहायो देवेशो गणैश्च बहुभिर्वृतः ।
अवतीर्य वृषात्तूर्णं सहितः शूलधृग्विभुः ।
गिरिशस्तु महातेजाः प्रविष्टस्तु सभां हरः ।                [15]
ऋद्ध्या सहायसंयुक्तश्च तथा वैश्रवणः स्वयम् ।
अन्योन्यं तौ समालिङ्ग्य उपविष्टावुभावपि ।
सभायां तत्र तौ देवौ ते च देवा यथाक्रमम् ।
उपविष्टा गणाश्चैव यक्षाश्च सह गुह्यकैः ।
अक्षद्यूतं ततस्ताभ्यां प्रवृत्तं समनन्तरम् ।                [20]
एतस्मिन्नन्तरे तत्र राक्षसेन्द्रं विभीषणम् ।

दुर्मतिम्) —(l 157) D5 देहम् (for रूपम्) —(l 159) D5 चतुर्विधं विभज्यात्मा D6 चतुर्धा तु विभज्यात्मानं (hypm) (for the prior half) D5 शङ्ख (for देवश्) D5 शङ्ख (for चक्र) —(l 160) D6 [ऽ]पि (for ते) D5 सर्वेषु देवता जाता (for the prior half) Ś1 D5 वानरेषु —(l 161) D5 ऋक्षेषु (for ऋक्षीषु) and बल (for मद) —(l 162) D5 रघुशार्दूलो —(l 163) Note hiatus between the two halves D6 विनाशोयम् (for विनाशाय) —D5 6 om l 164-168 —(l 165) Ś1 एव छिन्ना (for अविच्छिन्ना) —(l 168) L (ed) चिरजीवी —(l 169) L (ed) ब्रह्म (for ब्रह्मणा) D5 6 यत्र वै (D6 त्वं चापि) ब्रह्मणाप्युक्तो (for the prior half) —(l 170) D5 6 तद् (for त्वं) D5 सर्वज्ञं D6 धर्मज्ञ —(l 173) D5 भवाँल्लङ्केश्वरश्चाहं (for the prior half) —(l 174) Ś1 पितृ (for पित्रा) L (ed) न (for त्वत्) D6 हृदि मे तत (for गदितं मया) —(l 175) D5 जयाय च (for [अ]रिसूदन) —L (ed) om l 176-177 —(l 176) D5 6 स्वस्ति कुर्वन्तु (for करोतु स्वस्ति) D5 [ऽ]थ (for च) —(l 177) D6 12 पुराण (for पुराणः) D5 तथा देवो जनार्दनः (for the post half) —After l 177 D5 6 ins

13* पिता च ते महाबाहो सततं पातु सुव्रत ।

—(l 178) D6 तु (for च) —After l 178, D5 ins colophon [युद्धकाण्डे कैकसीवाक्यम् ॥ १०० ] —(l 179) D6 स (for तु) D5 चनस्यासौ (for तु धर्मात्मा) D5 तामापृच्छ्य च वीर्यवान् D6 अथामापृच्छ्य वीर्यवान् (for the post half) —(l 180) D6 स (for च) D5 धर्मात्मा खमुत्पत्य (for धर्मेण उत्पपात स) L (ed) राक्षसे —After l 180 D5 ins

14* चतुर्भिः सचिवैः सार्धं बन्धुना स विवर्जितः ।

7

For l 1-6, cf l 1-6 of App I (No 6) —(l 1) B1 2 सन्ध्यायाम् (for ससंध्यम्) —(l 2) V2 D5 भ्रुकुटीं, B2 भ्रुकुटिं —(l 3) Ñ2 प्रकाशत V2 निरीक्षत (for प्रपश्यन्तं) —(l 4) B2 3 अभिवादयते (for °वाद्य ततो) Ñ2 D5 [ई]क्षणः (for [ई]क्षणः) —(l 5) B1 4 विभीषणः (here and below) —(l 7) Ñ2 B1-3 कलाश —(l 9) V1 B1 गन्धर्वैः (for गुह्यकैः) —(l 10) V1 B4 स तु प्रयातो B2 3 अथामहार्थो (for अथाजगाम) —(l 11) Ñ2 B1 D5 च (for स) —(l 12) B4 सखो (for -सभां) V1 प्राप्तो देवो (by transp) Ñ2 B4 D5 संप्राप्तो (for प्राप्तो हि) —(l 13) Ñ2 B4 D5 गौर्या सह महादेवो (for the prior half) Ñ2 V1 B1 D5 तु (for च) —(l 14) B2 3 महितः (for सहितः) Ñ2 B4 D5 शूलभृत्, —(l 15) Ñ2 B2 D5 च (for तु) —(l 17) Note hiatus between the two halves B3 दे (for तौ) —(l 18) B3 यत्र B2 दे (for तौ) —(l 20) B1 2 तयोः (for ताभ्यां) —(l 24) B4 स कुल-

दृष्ट्वा पौलस्त्यमायान्तं शिवं प्राह धनेश्वरम्।
अयं विभीषणः प्राप्तः शरणं तव पार्थिव।
मन्युनाभिप्लुतो वीरो राक्षसेन्द्रविमानितः।
सिंहासनस्य भङ्गेन सिंहासनसमुत्सुकः। [25]
परुषाणां च वाक्यानां तस्मिन्क्रुध्वा रुषेण च।
इह प्राप्तस्त्वयं श्रेयः यस्तु कृतमतिस्त्वयि।
सर्वथा ह्येष दुर्धर्ष क्षिप्रमद्यैव वीर्यवान्।
रामाभ्यासं महावीर्यो गच्छतां तव शासनात्।
ततो यास्यति नरव्याघ्र स रामं शत्रुतापन। [30]
अभिषेक्ष्यति राज्येन राक्षसानां विभीषणम्।
सख्ये चैव तदा रामः सुग्रीवश्च तथा कपिः।
दर्शयिष्यति दुर्धर्षो रामो वीरं विभीषणम्।
ततस्तु सगता श्रेते क्रीडाक्षय इवाक्षय।
लोककार्यं करिष्यन्ति क्षिप्रं हि त्रिबुधैः सह। [35]
सविप्रुतो विप्रगणैरभिष्टुता
वहन्ति यत्र सुरभूतये शुभम्।
सुसंस्कृतं हव्यवहा हवौ हुतं
तथा त्रयो रामविभीषणादयः।
कपिप्रवीरश्च सुमनतो बली [40]
विभीषणेनानुगतो महात्मा।
महद्धि लोके ह्यसुरामरे यथा
तथा ह्ययं कर्म करिष्यतेऽनघ।
एवं सजल्पतस्तत्र सप्राप्तश्च विभीषणः।
जानुभ्यां पतितो गत्वा शिरसा त्ववनीं गतः। [45]
तं प्राह शंकरः श्रीमान्स च वैश्रवणः प्रभुः।
उत्तिष्ठोत्तिष्ठ भद्रं ते मा मन्युं कुरु राक्षस।

श्रियं प्राप्नुहि दुर्धर्ष दशग्रीवादनन्तरम्।
गच्छ सौम्य गुणारामो रामो यत्र महाभुज।
सुग्रीवो वानरश्चैव लक्ष्मणश्च प्रतापवान्। [50]
इतो गत महातेजा रामं शस्त्रभृतां वरः।
अभिषेक्ष्यति राज्येन लङ्कायां शत्रुघातिनम्।
रावणं च रणे रामः नगण पुरुषर्षभ।
निहनिष्यति धर्मात्मा प्रसह्य रणमूर्धनि।
तं निहत्य महाबाहुः सीतामादाय सत्वरः। [55]
स्वपुरीं यास्यते धीमान्सह सौमित्रिणा प्रभुः।
लङ्कायामीश्वरं चैव भवन्तं विबुधोपमम्।
स्थापयिष्यति धर्मात्मा नचिराय महायशाः।
ततो वैश्रवणो राजा पौलस्त्यकुलनन्दनम्।
विभीषणं राक्षसेन्द्रं तत्र प्राह महाद्युतिः। [60]
त्वं राजा सर्वथा वीर लङ्कायां प्रथितस्तदा।
भविष्यस्यचिरादेव दण्मेत पुरातनम्।
प्रथितः सर्वथा वत्स भविष्यसि युगे युगे।
अनागतं त्वया वीर धर्मज्ञेन महात्मना।
स त्वं धर्मभृतां श्रेष्ठ क्षिप्रमद्यैव राघवम्। [65]
भवाय सर्वभूतानामभवाय च रक्षसाम्।
उपगच्छ नरव्याघ्रमात्मनश्च विभूतये।
त्वं रामसहितः क्षिप्रं कुरु कार्यं दिवौकसाम्।
ऋषीणां च महाभाग ये चान्ये धर्ममाश्रिताः।
अधर्मशीलं निरपत्रपं यथा [70]
निरङ्कुशं वैरमदानुगामिनम्।
तपश्चराणां मृदुसौम्यशीलिनां
सदा विरुद्धं जहि रावणं तथा।

(for मन्युना) —(l 25) $V_1$ $B_1$ रुषेण च, $B_{2,3}$ न्वरेण च (for -समुत्सुकः) —$B_1$ om (hapl) l 26 —(l 26) $V_2$ तु (for first च) $B_3$ यदा (for तस्मिन्) —(l 27) $B_1$ [अ]पैव (for अयं) and कृत्वा मतिं (for कृतमतिः) $B_3$ त्वया —(l 28) $B_2$ ह्यत्र (for श्रेयः) $N_2$ $D_5$ दुर्धर्ष (for दुर्धर्ष) —(l 30) $V_2$ तत्र $N_2$ $B_4$ यावत् (for यास्य) $\tilde{N}_2$ शत्रुनापन —(l 31) $B_2$ अभिषेक्ष्याभि $B_1$ धर्मज्ञ $D_5$ राजान (for राज्येन) —(l 32) $\tilde{N}_2$ $B_4$ सखा, $V_1$ $D_5$ तदा (for तथा) $B_1$ सुग्रीवाय यथा कपि (for the post half) —(l 33) $B_{2,3}$ रणे (for रामो) —(l 36) $\tilde{N}_2$ $V_1$ $B_1$ $D_5$ समेधिता (for सविप्रुतो) $B_3$ विष्णु (for विप्र) —(l 37) $B_4$ यज्ञे (for यत्र) $\tilde{N}_2$ $D_5$ यज्ञे पुरस्कृते —(l 38) $\tilde{N}_2$ $B_4$ $D_5$ हुताश (for हुत) $V_1$ $B_1$ सुसंस्कृता हव्यवह ($V_1$ °भुज) कृतौ हुताश —(l 39) $B_4$ यथा (for तथा) —(l 40) $D_5$ समतो (for सुमनतो) —(l 41) $D_5$ महात्मना (for महात्मा) —(l 42) $\tilde{N}_2$ $B_4$ सुरासुरे यथा $V_2$ त्रिपुरान्धरे यथा $B_1$ च लोकमहाम्बरे, $D_5$ [ऽ]सुरसेश्वरे यथा (for ह्यसुरामरे यथा) —(l 43) $B_2$ om (hapl ?) तथा $N_2$ $D_5$ हि तद्, $V_2$ तु तद् $B_4$ हित (for ह्ययं) $B_1$ यथा तथा (for तथा ह्ययं) —(l 44) $B_1$ यत्र $B_3$ एतस्य (for एवं स) $B_3$ एतस्मिन्नन्तरे (for the prior half) —(l 45) $B_{2-4}$ पतितो (for पतितो) $V_2$ त्ववनि $B_{2,4}$ धरणी (for त्ववनीं) —(l 46) $B_4$ रे (for च) —(l 48) $N_2$ $D_5$ दुर्धर्षां $B_4$ धर्मज्ञ (for दुर्धर्ष) —(l 49) $B_4$ गुणाराम (for गुणारामो) $V_2$ यत्र रामो (by transp) $B_3$ महाभुज (for °भुज) —(l 51) $N_2$ गतो $B_1$ गते (for गत), $B_4$ महातेजे (for °तेजा) —(l 53) $B_1$ पुरुषर्षभ —(l 56) $B_{1,3}$ स, $D_5$ स्वां (for स) $B_4$ यास्यति श्रीमान् (for यास्यते धीमान्) $N_2$ $D_5$ विभुः (for प्रभुः) —(l 57) $\tilde{N}_2$ चैव, $B_{2,3}$ रामो (for चैव) $B_4$ त्रिदिवोपम —(l 58) $B_4$ नचिरात्स —(l 59) $B_4$ पुलस्त्य $N_2$ $B_4$ $D_5$ -नन्दन —(l 60) $B_{1,3}$ महामते (for °द्युति) —(l 61) $D_5$ om (hapl) from the post half up to the prior half of l 64 $N_2$ प्रथितश्च (for प्रथितः) $N_2$ $B_{2,3}$ तथा —(l 62) $B_4$ पुरातने —G (ed) om l 63-64 $B_{1,3}$ om l 63 —(l 63) $V_1$ राम $B_2$ वीर (for वत्स) —(l 64) $V_2$ अनागतस्त्व $B_1$ वत्स मे तद्, $B_{2,3}$ समागत (for अनागतं) —(l 65) $B_2$ श्रेष्ठ, $B_3$ श्रेष्ठ (for श्रेष्ठ) —For l 65 66 $V_1$ subst

1* पालिन चिरात्स्वाम्यं लङ्कायां भविष्यति।

—(l 68) $\tilde{N}_2$ $B_4$ $D_5$ तत्र $B_3$ जीव (for क्षिप्रं) —(l 71) $B_4$ महात्म $N_2$ $B_4$ $D_5$ स्वैर (for वैर) —(l 72) $V_1$ $B_{1,4}$ $D_5$ शालिनां (for शीलिनां) —(l 73) $B_4$ महाविरुद्ध (for सदा विरुद्धं) —(l 74) $B_1$ लोकविघातने,

महाध्वरे सोमविलोपनं यथा
उथा च देवादिविघातने रतम्। [75]
दशाननं पापरतं यथा स्थितं
प्रियेऽनुजे देवगणे च नित्यम्।
यथा विमाने तु यथा स्थितं ध्रुवं
न सत्पथं दूरत एव वर्जयेत्।
दशाननं वर्जयतस्त्वमानघ [80]
यशश्च ते नित्यसुखानुयायिनः।
श्रुत्वैतद्वचनं धीमानग्रजस्य गुणाच्युतम्।
अधोमुखो ध्यानपरो ह्यतिष्ठत्स विभीषणः।
तं ध्यायमानं भगवानुवाच प्रभुरव्ययः।
उत्तिष्ठोत्तिष्ठ राजेन्द्र सुखमाप्नुहि शाश्वतम्। [85]
सुकृतस्य महाप्राज्ञ तपसः फलमीदृशम्।
प्रत्यक्षं दृश्यते धीर सर्वमेतद्विभीषण।
तस्मादुत्तिष्ठ गच्छ त्वं पुराणं प्रभुमव्ययम्।
आधारं सर्वभूतानां शाश्वतं निरवग्रहम्।
स हि धर्मनिधानं च गतिर्गतिमतां वरः। [90]
कृत्स्नस्य जगतो मूलं तस्माद्गच्छस्व राघवम्।
श्रुत्वैतद्वचनं तत्र नीलकण्ठेन भाषितम्।
उदतिष्ठन्महाबाहुस्तैरेव सचिवैः सह।
नमस्कृत्वा शिवं देवं तथा वैश्रवणं प्रभुम्।
रामाभ्यासं ययौ क्षिप्रं धर्मात्मा स विभीषणः। [95]
जगामाकाशमाविश्य रामो यत्र महाबलः।

8

After 6.12.3, D6-7.10.11 S ins.:

सुग्रीवस्त्वथ तद्वाक्यमाभाष्य च विमृश्य च।
ततः शुभतरं वाक्यमुवाच हरिपुंगवः।
स दुष्टो वाप्यदुष्टो वा किमेष रजनीचरः।
ईदृशं व्यसनं प्राप्तं भ्रातरं यः परित्यजेत्।
को नाम स भवेत्तस्य यमेष न परित्यजेत्। [5]
वानराधिपतेर्वाक्यं श्रुत्वा सर्वानुदीक्ष्य च।
ईषदुत्स्मयमानस्तु लक्ष्मणं पुण्यलक्षणम्।
इति होवाच काकुत्स्थो वाक्यं सत्यपराक्रमः।
अनधीत्य च शास्त्राणि वृद्धाननुपसेव्य च।
न शक्यमीदृशं वक्तुं यदुवाच हरीश्वरः। [10]
अस्ति सूक्ष्मतरं किंचिद्यथात्र प्रतिभाति मे।
प्रत्यक्षं लौकिकं चापि विद्यते सर्वराजसु।
अमित्रास्तत्कुलीनाश्च प्रातिदेश्याश्च कीर्तिताः।
व्यसनेषु प्रहर्तारस्तस्मादयमिहागतः।
अपापास्तत्कुलीनाश्च मानयन्ति स्वकान्हितान्। [15]
एष प्रायो नरेन्द्राणां शङ्कनीयस्तु शोभनः।
यस्तु दोषस्त्वया प्रोक्तो ह्यादानेऽरिबलस्य च।
तत्र ते कीर्तयिष्यामि यथाशास्त्रमिदं शृणु।
न वयं तत्कुलीनाश्च राज्यकाङ्क्षी च राक्षसः।
पण्डिता हि भविष्यन्ति तस्माद्ग्राह्यो विभीषणः। [20]
अव्यग्राश्च प्रहृष्टाश्च ते भविष्यन्ति संगताः।
प्रवादश्च महानेष ततोऽस्य भयमागतम्।
इति भेदं गमिष्यन्ति तस्माद्ग्राह्यो विभीषणः।

---

B4 सोमविलोपिन. —(l. 75) B1 चारादि (for देवादि-). V1 सदा च वै तात (for तथा च देवादि-). —(l. 76) B1 पापभव; B3 पापतर. —(l. 77) B4 प्रियानुजे. Ñ2 V1 B1 D9 नित्यशः (for नित्यम्). —(l. 78) B1-3 यथा. V1 विमार्गे (for विमाने). B4 च (for तु). B1-3 पथा (for यथा). —(l. 81) V1 पर (for च ते). B1 नित्यसुखानि यानि च. —(l. 84) B1 विभीषण च (for तं ध्यायमानं). —(l. 86) B1 स्वकृतस्य —(l. 89) B1 सांप्रत (for शाश्वत). —(l. 90) D9 धर्मविधानं. —(l. 91) Ñ2 स कृत्स्न (for कृत्स्नस्य). B2 गच्छ स (for गच्छस्व). —(l. 92) Ñ2 D9 परम भद्र (for वचनं तत्र). —(l. 93) Ñ2 तदतिष्ठत्. —(l. 94) Ñ2 B2.4 D9 नमस्कृत्य. Ñ2 D9 महादेव (for शिवं देवं). —B1 om. l. 96. V1 reads l. 96 twice (var.) —(l. 96) V1 (both times) यत्र रामो (by transp.). V1 (first time) विभीषण (for महाबल°).

8

(l. 1) M1.2 आकर्ण्य, Cv.r.m.g.t as above (for आभाष्य). —(l. 3) D6-7 M1 Cm.g g-, Cr.k.t as above (for स). —(l. 4) G1 damaged for व्यसन प्रा. G1 य, Cv as above (for य). —T2 om. (hapl.) l. 5. —(l. 5) M3 राम (for नाम). —(l. 6) D6 उदीक्षत, D10.11 T2 G1 M1.2.3 उदी(D11 °ही)क्ष्य तु (for उदीक्ष्य च). —(l. 7) D6 T2 M3 विस्मयमानस्तु. D6.7 शुभलक्षणः D11 पुण्यलक्षण; G2 पार्श्वत स्थित (for पुण्यलक्षणम्). —(l. 8) T2 वाक्यविशारद° (for सत्यपराक्रम°). —(l. 9) G3 damaged for वृद्धाननु. —(l. 11) M3 Ck अति-; Cr.m.g.t as above (for अस्ति). T2 सूक्ष्मतम. D6 T1 किं तु; T2 किं नु; Cr.g.k.t as above (for किंचिद्). D6.7 T G1.2 M2.3.5 यदत्र, D6 यदद (for यथात्र). D6.10.11 T2.3 G1.2 Ct मा, D6 मा (for मे). —(l. 12) D6 reads प्रत्यक्षं in marg. D6 T2 G2 M वा (for च). D10.11 वर्तते (for विद्यते). —(l. 14) G3 damaged for दयमिहा —(l. 16) T2 M3 शोभन (for शोभन°). —(l. 18) D6 तच्च (for तत्र). G2 om. ते (subm.). —(l. 19) D11 राजस°, G1 damaged (for राक्षस). —(l. 21) M1.2 अभव्याश्च; Cv as above (for अव्यग्राश्च). D1 T2 G3 Cv.r प्रहृष्टाश्च; Cg.t as above (for प्रहृष्टाश्च). D6 T2.3 G1 M1.2.5 ते (for second च). G3 अव्यग्रा इ प्रहृष्टास्ते (for the prior half). D6 T1.2 G M न (for ते). T2 भविष्यति न संगता° (for the post. half). —(l. 22) D6.7.10.11 T2 G2 M1.2 Cm.g.k.t प्रवादस्तु, M3 प्रवादश्च, Cv.r m.p as above (for प्रवादश्च). D7 पत्र; G2 अत्र, Cv.m k.t as above (for एष). D6 ततोऽस्य; D10.11 Cl.t (s)तोऽन्यस्य, T2 ततोऽन्य; Cv as above (for ततोऽस्य). D6 T2.3 ततो विस्मयमागत (for the post. half).

न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः ।
मद्विधा वा पितुः पुत्राः सुहृदो वा भवद्विधाः । [25]
एवमुक्तस्तु रामेण सुग्रीवः सहलक्ष्मणः ।
उत्थायेदं महाप्राज्ञः प्रणतो वाक्यमब्रवीत् ।
रावणेन प्रणिहितं तमवेहि विभीषणम् ।
तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ।
राक्षसो जिह्मया बुद्ध्या संदिष्टोऽयमिहागतः । [30]
प्रहर्तुं त्वयि विश्वस्ते प्रच्छन्नो मयि वानघ ।
लक्ष्मणे वा महाबाहो स वध्यः सचिवैः सह ।
रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ।
एवमुक्त्वा रघुश्रेष्ठं सुग्रीवो वाहिनीपतिः ।
वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् । [35]

9

After 6.13.5, D1–7.10.11 S ins.:

तस्य तद्वचनं श्रुत्वा रामो वचनमब्रवीत् ।
वचसा सान्त्वयित्वैनं लोचनाभ्यां पिबन्निव ।
आख्याहि मम तत्त्वेन राक्षसानां बलाबलम् ।
एवमुक्तं तदा रक्षो रामेणाक्लिष्टकर्मणा ।
रावणस्य बलं सर्वमाख्यातुमुपचक्रमे । [5]
अवध्यः सर्वभूतानां गन्धर्वोरगरक्षसाम् ।
राजपुत्र दशग्रीवो वरदानात्स्वयंभुवः ।
रावणानन्तरो भ्राता मम ज्येष्ठश्च वीर्यवान् ।
कुम्भकर्णो महातेजाः शक्रप्रतिबलो युधि ।
राम सेनापतिस्तस्य प्रहस्त इति विश्रुतः । [10]
कैलासे येन संग्रामे माणिभद्रः पराजितः ।
बद्धगोधाङ्गुलित्राणो अवध्यकवचो युधि ।
धनुरादाय तिष्ठंस्तु अदृश्यो भवतीन्द्रजित् ।
संग्रामसमयव्यूहे तर्पयित्वा हुताशनम् ।
अन्तर्धानगतः शत्रूनिन्द्रजिद्धन्ति राघव । [15]
महोदरमहापार्श्वौ राक्षसश्चाप्यकम्पनः ।
अनीकस्थास्तु तस्यैते लोकपालसमा युधि ।
दशकोटिसहस्राणि रक्षसां कामरूपिणाम् ।
मांसशोणितभक्षाणां लङ्कापुरनिवासिनाम् ।
स तैस्तु सहितो राजा लोकपालानयोधयत् । [20]
सह देवैस्तु ते भग्ना रावणेन दुरात्मना ।
विभीषणवचः श्रुत्वा रामो दृढपराक्रमः ।
अन्वीक्ष्य मनसा सर्वमिदं वचनमब्रवीत् ।
यानि कर्मापदानानि रावणस्य विभीषण ।
आख्यातानि च तत्त्वेन ह्यवगच्छामि तान्यहम् । [25]

—(l. 23) T3 कारिष्यति Cm.g.k.t as above (for गमिष्यति) D10.11 G1 प्राप्ते Cv as above (for प्रश्ने) —(l. 24) T1 सर्वे च (for न सर्वे) G2 परमोपमाः Cr.m.g.k as above (for भरतो°) —(l. 25) G3 damaged for दो वा भव —(l. 27) M2 [प]न (for [इ]) D6 वच (for महा) G2 प्रश्रितो Ct as above (for प्रणतो) —(l. 28) D6.7 T2 G1.2 M1.2 गवेहि D7.10.11 G M1.3 निशाचर (for विभीषणम्) —(l. 30) T1 राक्षस्या T2 रक्षसा Cr.g as above (for राक्षसो) —(l. 31) T2 विश्वस्त D6 प्रच्छन्ने D7.10.11 Ct विश्वस्ते G3 damaged M1.2 प्र छन्न (for प्रच्छन्नो) D6 T2 राघव D7 T2 G1 चानघ (for वानघ) —(l. 32) D6 लक्ष्मणेन (for लक्ष्मणे वा) D6 सह स (for स वध्य) —(l. 34) D7 M3 हरिश्रेष्ठ (for रघुश्रेष्ठ) —(l. 35) D7 T2 वाक्यकुशलम् (for °कुशलं)

9

(l. 1) G3 damaged for तस्य त —(l. 4) D6 T2 उक्ते D7.11 T2.3 G M उक्तस् —(l. 6) G2.3 सोऽवध्य Cg as above (for अवध्य) D6 T1 देवानां Cg as above (for भूतानां) D6 T1 G1 M3 [अ]सुर M3 [अ]मर (for [उ]रग) D10.11 पक्षिणां (for रक्षसाम्) D7 देवगन्धर्वरक्षसां G3 गन्धर्वा **** सां (damaged) (for the post. half) —(l. 8) D7 M3 [अ]वरजो (for [अ]नन्तरो) G1 स (for च) —(l. 9) G1.3 -भसो बले Cg.k.t as above (for -बलो युधि) —(l. 10) G2 सैन्य (for राम) D7.10.11 G1.3 M1.2 Cg स्व ति वि(D10.11 वै) T3 युधि वि G2 रा यः M1.3 इति वै (for इति वि) —(l. 11) D6 T2.3 M3 रुजतो (for कैलासे) D10.11 G2.3 समरे (for संग्रामे) D7.10 मणिभद्र Cg as above (for मा°) G2 प्रतापवान् (for पराजित°) —(l. 12) Note hiatus between the two halves D6.10.11 T2.3 G2 M3 [अ]गुलित्रम् G1 damaged Cr.m.g as above (for [अ]ङ्गुलित्राणो) D7 G2 M1.2.3 ह्यवध्य M3 त्ववध्य Cg as above (for अवध्य) —(l. 13) Note hiatus between the two halves D7.10.11 वसितान् T1 तिष्ठन् M1.2 सगुणम् (for तिष्ठंस्तु) G2.3 °वद्दृश्यो (to avoid hiatus) (for अदृश्यो) —(l. 14) D7.10.11 T1 M1.2 Cr.t सग्रामे Cm.g as above (for संग्राम) D6.7 T1 समये D7.10.11 Ct सु(D7 स)मरस् M1.2 स सम Cr.m.g as above (for -समय) G2.3 संग्रामे समभिव्यूहे (G2 °व्यूहे) M3 संग्रामे च समव्यूहे (for the prior half) —(l. 15) D6 M1.2 ऋजुर् D10.11 श्रीमान् (for शत्रून्) D6 T2.3 विद्रविष्यति (for न्द्रजिद्धन्ति) —(l. 17) D10.11 M1.2 Cb.t अनीकपास् G1 अतिकायस् Cg as above (for अनीकस्थास्) M3 ते सर्वे (for तस्यैते) —D7 om. (hapl.) from the post. half up to the prior half of l. 20 G1 लोकपालोपमा युधि (for the post. half) —(l. 18) G3 damaged for दशकोटिस —(l. 19) D10.11 T1 M3 भक्ष्याणां (for भक्षाणां) —(l. 21) D6.7 T2.3 भग्नास्ते (by transp.) (for ते भग्ना) D6 G1 M1.2 Cg महात्मना (for दुरात्मना) —(l. 22) G1 रावणो रघुनन्दन (for the post. half) D7.10.11 G2.3 M2.3.4 विभीषणस्य तु वचस्तच्छ्रुत्वा (G2 °च श्रुत्वा स) रघूत्तम (G2 M3 °नन्दन) —(l. 23) D7 मनसा (for मनसा) G2 पूर्वम् (for सर्वम्) G3 damaged for मिदं वचन —(l. 24) T2 यानि कर्म °पि पापानि (for the prior half) ❀ Cg. कर्मापदानानि अपदानं कर्मवृत्तमितिस्मरः । परिकल्प्य स्तवनं यशोशब्दप्रयोग । °तिवृत्तम्यापार

अहं हत्वा दशग्रीवं सप्रहस्तं सहात्मजम् ।
राजानं त्वां करिष्यामि सत्यमेतद्ब्रवीमि ते ।
रसातलं वा प्रविशेत्पातालं वापि रावणः ।
पितामहसकाशं वा न मे जीवन्विमोक्ष्यते ।
अहत्वा रावणं सङ्ख्ये सपुत्रबलबान्धवम् । [30]
अयोध्यां न प्रवेक्ष्यामि त्रिभिस्तैर्भ्रातृभिः शपे ।
श्रुत्वा तु वचनं तस्य रामस्याक्लिष्टकर्मणः ।
शिरसावन्द्य धर्मात्मा वक्तुमेवोपचक्रमे ।

## 10

After Sarga 13, D6-7.10.11 S ins.:

ततो निविष्टां ध्वजिनीं सुग्रीवेणाभिपालिताम् ।
ददर्श राक्षसोऽभ्येत्य शार्दूलो नाम वीर्यवान् ।
चारो राक्षसराजस्य रावणस्य दुरात्मनः ।
तां दृष्ट्वा सर्वतोऽव्यग्रं प्रतिगम्य स राक्षसः ।
आविश्य लङ्कां वेगेन राजानमिदमब्रवीत् । [5]
एष वानरऋक्षौघो लङ्कां समभिवर्तते ।
अगाधश्चाप्रमेयश्च द्वितीय इव सागरः ।
पुत्रौ दशरथस्येमौ भ्रातरौ रामलक्ष्मणौ ।
उत्तमायुधसम्पन्नौ सीतायाः पदमागतौ ।
एतौ सागरमासाद्य संनिविष्टौ महाद्युती [10]
बलं चाकाशमावृत्य सर्वतो दशयोजनम् ।
तत्त्वमेतन्महाराज क्षिप्रं वेदितुमर्हसि ।
तव दूता महाराज क्षिप्रमर्हन्त्यवेक्षितुम् ।
उपप्रदानं सान्त्वं वा भेदो वात्र प्रयुज्यताम् ।
शार्दूलस्य वचः श्रुत्वा रावणो राक्षसाधिपः । [15]
उवाच सहसा व्यग्रः सम्प्रधार्यार्थमात्मनः ।
शुकं नाम तदा रक्षो वाक्यमर्थविदां वरम् ।
सुग्रीवं ब्रूहि गत्वाशु राजानं वचनान्मम ।
यथा संदेशमक्लीबं श्लक्ष्णया परया गिरा ।
त्वं वै महाराज कुलप्रसूतो [20]
महाबलश्चर्क्षरजःसुतश्च ।
न कश्चिदर्थस्तव नास्त्यनर्थ-
स्तथापि मे भ्रातृसमो हरीश ।
अहं यद्यहरं भार्यां राजपुत्रस्य धीमतः ।
किं तत्र तव सुग्रीव किष्किन्धां प्रति गम्यताम् । [25]
न हीयं हरिभिर्लङ्का शक्या प्राप्तुं कथंचन ।
देवैरपि सगन्धर्वैः किं पुनर्नरवानरैः ।
स तथा राक्षसेन्द्रेण संदिष्टो रजनीचरः ।
शुको विहंगमो भूत्वा तूर्णमाप्लुत्य चाम्बरम् ।
स गत्वा दूरमध्वानमुपर्युपरि सागरम् । [30]
संस्थितो ह्यम्बरे वाक्यं सुग्रीवमिदमब्रवीत् ।

---

इत्यर्थः ।, Ct : कर्मापदानानि युधि कर्मनिर्वर्तितशौर्याणि. ❀ —(l. 25) D10 मद्धनानि. G1 हि (for च). M3 आख्याति तानि (for आख्यानानि च). —(l. 26) D6 T2.3 M3 मनोभव (for सदाभवम्). —(l. 27) T2 एव (for एतद्). D10.11 शृणोतु मे (for ब्रवीमि ते). —(l. 28) D6 T1 M1.2 वा स; T2 चापि (for वापि). G2 राक्षसः (for रावणः). —(l. 29) G2 damaged for वा न मे. —(l. 30) T2 हत्वा तु (for अहत्वा). M3 ममैव (for सपुत्र-). D7.10.11 G1 -बल-; G2.3 -ज्ञाति-; M1.2 -भ्रातृ- (for -बन्धु-). —(l. 31) T2 तु (for न). M3 भ्रातृभिस्त्रिभिः शपे (for the post. half). —(l. 32) M1.2 स विभीषणः (for [अ]क्लिष्टकर्मणः). —(l. 33) M1.2.3 चरणौ (for धर्मात्मा). ❀ Cr : शिरसावन्द्येत्यत्र आवन्द्येति पदच्छेदः ।; so also Cg. ❀ D1.10.11 G प्रचक्रमे (for [उ]पचक्रमे).

## 10

(l. 1) D11 विनिष्टां (meta.) (for निविष्टां). —(l. 4) G1 तद्; G2 M3 त; Cm.k.t as above (for तां) ❀ Ck. तामिति पदम् । वाहिनीमित्यर्थः ।; so also Ct. ❀ D6.7.10.11 T3 M2.3 Cm सर्वतोऽव्यग्र (D6 °ग्रा); T1 G सर्वमव्यग्र (T2 °ग्रां) (for सर्वमव्यग्र). D6 T1 प्रतिगृह्य (for °गम्य). G2 damaged for स राक्षस.. —(l. 5) K (ed.) प्रविश्य (for आविश्य). D6.7 T1.2 M3 रावण वानर्य्, Cm as above (for राजानमिदम्). —(l. 6) D6.10.11 T2 G2.3 M2.3 एष वै वानरर्क्षौघो (D6 °र्क्षौ यो, G2 °क्षौघौ) (for the prior half). —(l. 8) D7 M3 [ए]तौ (for [इ]मौ). —(l. 9) D10.11 उत्तमौ रूप- (for उत्तमायुध). T2 M3 पदवीं गतौ, Cr.m.g.k.t as above (for पदमागतौ). —(l. 10) D6.7 T1.2 G2 महाबलौ; D10.11 °द्युते; G2 ***लौ (damaged) (for महाद्युती). —(l. 11) D6 सकाशम्; M3 आकाशम् (for चाकाशम्). T2 G1 आविश्य (for आवृत्य). —(l. 12) D10.11 T3 M2.3 Cm g.t तत्त्वभूत; G1.2 तत्त्वपूर्वं; G3 तत्त्व ब्रूमे (for तत्त्वमेतन्). D6 महाभाग (for महाराज). —D6 om. (hapl.) from the post. half up to the prior half of l. 13. G1 क्षिप्रमर्हसि वेदितुं (for the post. half). ❀ Cv : तत्त्वभूत महाराज क्षिप्रं वेदितुमर्हसीति सम्यक्पाठः ।; Cr : तत्त्वपूर्वं महाराजेति पाठः. ❀ —(l. 13) D6 अर्हसि (for अर्हन्ति). D7.10.11 वेदितुं (for [अ]वेक्षितुम्). —(l. 14) G1 वा सान्त्व (by transp.). M3 भेद (for भेदो). —(l. 15) D7.10.11 M3 राक्षसेश्वरः (for राक्षसाधिपः). —(l. 16) G2 damaged for सा व्यग्रः to सहसा व्यग्रः. M3 वीरः (for व्यग्र). —(l. 17) D10.11 साधु (for नाम). T2 -विशारद, M1.2.3 विदां वरः (for -विदां वरम्). —(l. 18) D6 T1.2 M3 त्व; T2 G1 तु (for [आ]शु). T2 G2 वचन (for वचनात्). —(l. 19) D6 अक्लिष्ट (for अक्लीब). —(l. 20) D6.7 T1.2 कुले (for कुल). —(l. 22) D7.10.11 कश्चन (for कश्चिद्). T3 सोऽस्त्यनर्थस्; T2 G1 M3 नाप्यनर्थस्; G2 ***र्थस् (damaged) (for नास्त्यनर्थस्). —(l. 23) M3 तव (for तथा). G1 M1.3 [अ]सि, M2 हि (for [अ]पि). D6 M3 हरीश्वर (for हरीश). —(l. 25) M1.2 अत्र (for तत्र). —(l. 26) D6 T2 M3 च (for हि). D6-7.10.11 T1.2 प्राप्तु शक्या (by transp.). —(l. 27) G1 न देवैरपि (for देवैरपि स-). ❀ Cg : अत्र नरग्रहणात् पूर्वार्धे हरिपदं नरोपलक्षकं बोध्यम्. ❀ —(l. 28) D6.10.11 T1 तदा (for तथा). G1 damaged for द्रेण सं. —(l. 29) D6 M3 उत्प्लुत्य (for आप्लुत्य). —(l. 31) D6.7 T1.2 [s]पि

सर्वमुक्त यथादिष्टं रावणेन दुरात्मना ।
तं प्रापयन्त वचनं तूर्णमाप्लुत्य वानराः ।
प्रापयन्त तदा क्षिप्रं लोष्टुं हन्तुं च मुष्टिभिः ।
स तैः प्लवंगैः प्रसभं निगृहीतो निशाचरः । [35]
गगनाद्भूतले चाशु परिगृह्यावतारितः ।
वानरैः पीड्यमानस्तु शुको वचनमब्रवीत् ।
न दूतान्घ्नन्ति काकुत्स्थ वार्यन्तां साधु वानराः ।
यस्तु हित्वा मतं भर्तुः स्वमतं संप्रभाषते ।
अनुक्तवादी दूतः सन्स दूतो वधमर्हति । [40]
शुकस्य वचनं श्रुत्वा रामस्तु परिदेवितम् ।
उवाच मा वधिष्टेति घ्नतः शाखामृगर्षभान् ।
स च पत्रलघुर्भूत्वा हरिभिर्दर्शिते भये ।
अन्तरिक्षे स्थितो भूत्वा पुनर्वचनमब्रवीत् ।
सुग्रीव सत्त्वसंपन्न महाबलपराक्रम । [45]
किं मया खलु वक्तव्यो रावणो लोकरावणः ।
स एवमुक्तः प्लवगाधिपस्तदा
　　प्लवंगमानामृषभो महाबलः ।
उवाच वाक्यं रजनीचरस्य
　　चारं शुकं तूर्णमदीनसत्त्वः । [50]

न मेऽसि मित्रं न तथानुकम्प्यो
　　न चोपकर्तासि न मे प्रियोऽसि ।
अरिश्च रामस्य सहानुबन्ध
　　स मेऽसि वालीव यथार्ह वध्य ।
निहन्म्यहं त्वां ससुतं सबान्धवं [55]
　　सज्ञातिवर्गं रजनीचरेश ।
लङ्कां च सर्वां महता बलेन
　　क्षिप्रं करिष्यामि समेत्य भस्म ।
न मोक्ष्यसे रावण राघवस्य
　　सुरैः सहेन्द्रैरपि मूढ गुप्तः । [60]
अन्तर्हितः सूर्यपथं गतो वा
　　तथैव पातालमनुप्रविष्टः ।
गिरीशपादाम्बुजसंगतो वा
　　हतोऽसि रामेण सहानुजस्त्वम् ।
तस्य ते त्रिषु लोकेषु न पिशाचं न राक्षसम् । [65]
त्रातारं नानुपश्यामि न गन्धर्वं न चासुरम् ।
अवधीस्त्वं जरावृद्धं गृध्रराजं जटायुषम् ।
किं नु ते रामसांनिध्ये सकाशे लक्ष्मणस्य वा ।

(for हि) D10 [अं]बर (for [अ]म्बरे) D1 इदं वचनम् (for सुग्रीवमिदम्) —(l 32) G3 [उ]द्दिष्ट (for [आ]दिष्ट) —(l 33) D7 G3 Ct तद् Cg h as above (for तं) D3 M1 2 उत्प्लुत्य, Cv as above (for आप्लुत्य) —(l 34) D7 प्रारभन्त (for प्रापयन्त) D3 T1 2 M3 4 त्विव (for तदा) M5 लेष्टु, Cm t as above (for लोष्टुं) M1 2 transp लोष्टुं and हन्तुं —(l 35) D10 11 सर्वैः (for स तैः) T3 प्रसंगैः (for प्लवंगैः) D1 विगृहीतो M5 प्रगृहीतो (for निगृ°) —(l 36) D5 T1 चापि (for चाशु) T1 मुनलेनाशु D7 10 11 प्रतिगृह्य (for परि°) D3 T2 M3 4 निपातित (for [अ]वतारित) —(l 37) G1 वध्यमानस्तु M1 2 बध्यमानस्तु (for पीड्य°) M1 2 वाक्यमथ (for वचनम्) —D1 repeats l 38 after l 44 —(l 38) G1 M5 हनि (for घ्नन्ति) D5 (second time) कच्चिदपि साधव (for the post half) —(l 39) D3 परिभाषते D10 11 सुप्रभाषते Ck as above (for संप्रभाषते) —(l 40) T2 च (for स) —(l 41) D7 10 11 transp श्रुत्वा and रामस्तु D3 4 T3 G M6 स (for तु) M5 परिदेवन Cm g t as above (for °वितम्) —(l 42) T3 शाखामृगाधिपान् (for °मृगर्षभान्) D7 M5 शाखामृगगणांस्तथा (M6 °रा) (for the post half) ✿ Cg मा वधिष्टेति इत्येकोऽभ्यसिशायेणैकवचनम् । वधिष्टेत्यत्रार्षं सन्धि ।, Ck मा वधिष्ट । मा वधिष्वमिति यावत् । आर्षत्वेनादड्भाव । इतो वधं इति शुद्धिं चापि वदन्ति । एकवचनमार्षम् । so also Ct ✿ —(l 43) D5 T1 2 पत्री D7 पक्षी T3 पत्रि (for पत्र) T3 लघु (for लघुः) G [ऽ]भये (for भये) ✿ Cv पत्रलघु पत्रवद् बहुवितपक्ष इति यावत् । so also Cr m g Cr adds दर्शितेऽस्मिन् भये अभव इति पदच्छेद ।, Cg adds भये दर्शितेऽपि । Ck हरिभिर्भये राघवदर्शिते, अवगतमिते सति एवम्भूतः पत्रवल्लघुर्भूत्वा शीघ्रगतिरन्तरिक्षे स्थित्वा पुनर्वचनमब्रवीत् । पत्रलघु, दलवत्क्षिप्रं इत्यर्थं । तादृशस्य कथमन्तरिक्षे स्थिती रामवचनं तत्कथं श्रुतं स्यादित्यपाकर्तुम् । छेदे, so also Ct ✿ —(l 44) T2 M3 अतरिक्ष, G1 damaged (for अन्तरिक्षे) D5 स्थिरो G3 ततो, M1 2 शुक (for स्थितो) M1 2 स्थित्वा (for भूत्वा) D7 G1 शुके (for पुनर्) —(l 47) G3 M4 तथा (for तदा) —(l 48) G1 अधिपो (for ऋषभो) —(l 50) D6 T3 दूत (for चार) D6 10 11 T3 शुकम् D3 M3 दीनम् T3 G3 M1 2 क्रुद्धम् (for तूर्णम्) G1 2 M3 सत्त्वः Cg as above (for °सत्त्व) —(l 51) G1 [ऽ]सि Cg as above (for ऽसि) —(l 52) M6 नोपकर्ता (for चो°) D7 [अ]पि, M6 म (for first [अ]सि) D7 च (for second ऽसि) —(l 53) G1 महा; Cg as above (for सह) D7 [अ]नुबन्धे, T3 [अ]नुबन्ध (for [अ]नुबन्ध) —(l 54) D10 11 M1 2 वधोऽसि, T2 3 G1 M6 समोऽसि Cg as above (for स मेऽसि) —(l 55) D7 10 11 T3 G1 M3 6 सवधु M1 2 सबधु (for सबान्धव) —(l 56) T3 सजाति (for सज्ञाति) —(l 58) G1 damaged for क्षिप्रं करि D10 11 सर्वं (for क्षिप्र) —(l 59) D6 8 (in marg) T M1 2 राघवेण Cr as above (for राघवस्य) ✿ Cr m g l t राघवस्य राघवात् । (Cg पञ्चम्यर्थे षष्ठी) ✿ —(l 60) D7 10 11 सर्वैः (for सुरैः) G1 गहेन्द्रैः, M6 सुरेन्द्रैः (for सहेन्द्रैः) D7 T1 2 G1 3 M6 गूढ Cg k as above (for मूढ) ✿ Cg मूढेति सम्बुद्धि ✿ —(l 61) D1 अन्तर्हित D7 10 11 [ऽ]पि (for वा) —D6 7 T3 G M om l 63 64 —(l 63) T3 संगतोऽपि (for संगतो) —(l 64) D6 T3 [आ]त्मजस् (for [अ]नुजस्) —(l 65) T3 तव (for ते) T1 न * * * षु (for तस्य ते त्रिषु) M1 2 देवं नापि (for पिशाचं न) —(l 66) D6 नाभिपश्यामि D7 G1 नाथिगच्छामि G1 M1 अनुप° Ck as above (for नानुपश्यामि) —(l 67) M3 यद् (for त्वं) M3 अक्षयं किं (for गृध्रराज)

हृता सीता विशालाक्षी यां त्वं गृध्र न बुध्यसे ।
महाबल महात्मानं दुराधर्षं सुरैरपि । [70]
न बुध्यसे रघुश्रेष्ठं यस्ते प्राणान्हरिष्यति ।
ततोऽब्रवीद्वालिसुतो ह्यङ्गदो हरिसत्तमः ।
नायं दूतो महाराज चारकः प्रतिभाति मे ।
तुलितं हि बलं सर्वमनेनात्रैव तिष्ठता ।
गृह्यतां मा गमल्लङ्कामेतद्धि मम रोचते । [75]
ततो राज्ञा समादिष्टाः समुत्पत्य वलीमुखाः ।
जगृहुश्च बबन्धुश्च विलपन्तमनाथवत् ।
शुकस्तु वानरैश्चण्डैस्तत्र तैः सम्प्रपीडितः ।
व्याक्रोशत महात्मानं रामं दशरथात्मजम् ।
लुप्येते मे बलात्पक्षौ भिद्येते च तथाक्षिणी । [80]
यां च रात्रिं मरिष्यामि जाये रात्रिं च यामहम् ।
एतस्मिन्नन्तरे काले यन्मया ह्यशुभं कृतम् ।
सर्वं तदुपपद्येथा जह्यां चेद्यदि जीवितम् ।
नाघातयत्तदा रामः श्रुत्वा तत्परिदेवनम् ।
वानरानब्रवीद्रामो मुच्यतां दूत आगतः । [85]

Colophon

ततः सागरवेलायां दर्भानास्तीर्य राघवः ।
अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः ।
बाहुं भुजगभोगाभमुपधायारिसूदनः ।
जातरूपमयैश्चैव भूषणैर्भूषितं पुरा ।
वरकाञ्चनकेयूरमुक्ताप्रवरभूषणैः । [90]
भुजैः परमनारीणामभिमृष्टमनेकधा ।
चन्दनागरुभिश्चैव पुरस्तादधिवासितम् ।
बालसूर्यप्रतीकाशैश्चन्दनैरुपशोभितम् ।
शयने चोत्तमाङ्गेन सीतायाः शोभितं पुरा ।
तक्षकस्येव सम्भोगं गङ्गाजलनिषेवितम् । [95]
संयुगे युगसंकाशं शत्रूणां शोकवर्धनम् ।
सुहृदानन्दनं दीर्घं सागरान्तव्यपाश्रयम् ।
अस्यता च पुनः सव्यं ज्याघातविहतत्वचम् ।

---

D6 किमर्थम्; T2.3 M3 अथ (T3 °र)श्च (for अत्याश्चर्यम्). G गृध्रराजनमर्थ (G2 °म) (for the post. half). —(l. 68) D7 तु (for नु). D7.10.11 G1.3 च (for वा). —(l. 69) M1.2 transp. हृता and सीता. G3 यां त्वं बुध्य न गृध्यसे (for the post. half). —(l. 70) D6.8 T1.2 G2 M3.5 दुर्धर्षमपि सुरैरपि (for the post. half). —(l. 71) G2 नरश्रेष्ठ; Ck.t as above (for रघु°). —(l. 72) D6.8 T1.2 M3.5 तु, D7.10.11 [ऽ]पि (for हि). —(l. 73) D7.10.11 महाप्राज्ञ (for °राज). D6.7 T3 G1.3 M1.2.5 Cr g चारि(G1.3 °री)कः, Ck as above (for चारकः). G2 मा (for मे). ‡ Cr: चारी (°रि ?) कः चारः चर इत्यस्यास्तीति चारिकः अत इनिठनाविति ठन् ।, Cg: चारिकः स्वार्थे ठक्. ‡ —(l. 74) D7.10.11 तव. G1 [प]वास, G2.3 [अ]श्राव- (for [अ]त्रैव). —(l. 75) G1 M3 मा गमेद् (for मा गमल्). G2.3 प्रगृह्यतां दुरात्मायम् (for the prior half). —(l. 76) D6.8 T1.2 M3 समुत्प्लुत्य (for समुत्पत्य). —(l. 77) D6 जगृहु, T3 निगृह्य (for जगृहुर्). D3 तं (for second च). G3 ***न्तम् (damaged) (for विलपन्तम्). —(l. 78) D6 T1.2 च (for तु). D6 om. from श up to च. T1.3 तथ, G2 चैवच (corrupt) (for चण्डैस्). T3 तत्रैव (for तत्र तै°). —(l. 79) D7.10.11 व्याजुघोष (for व्याक्रोशत). —(l. 80) D6 G2 M3.5 Ck लुप्यन्ते, Ct as above (for लुप्येते). G2 च तथा; M3 प्र व्रणात् (for मे बलात्). D6.11 G2 M3.5 भिद्यन्ते (for भिद्येते). D6.7.10.11 M1.2 मे (for च). D6 तदा (for तथा). M3 transp. तथा and [अ]क्षिणी. —(l. 81) D6 रात्रौ (for first रात्रिं). D6.7 रात्रौ (for second रात्रिं). T3 तावत्, M1.2 यावत्; Cr.m g k.t as above (for यामहम्). ‡ Cr: यां च रात्रिमित्यादि । रात्रिशब्दोऽहोरात्रवाचकः । यां च रात्रिं यस्मिन्दिवसे मरिष्यामि यस्मिंश्च जाये जनये " अनित्यत्वस्यावश्यंभावित्वात् ।, Cr: जाये जनये जातवानस्मि । जननकाले आरभ्य, so also Cg k.t. ‡ —(l. 82) M1.2 एव काले तु, Cv as above (for अन्तरे काले). T3 [अ]पि (for हि). G2 damaged for कृतम्. —(l. 83) G3 तत्सर्वम् (by transp.); M3 सर्वं त्वम् (for सर्वं तद्). G1 अथ, M1.2 इह; Cv as above (for यदि). ‡ Cg: चेदिति अविश्वासे यदम्. ‡ —(l. 84) T3 नाघारयद् (for नाघातयद्). D6 परिदेवन; D6.7.10.11 T3 M1.2.5 परिदेवितं (for परिदेवनम्). —(l. 85) M1.2 त्वाब्रवीद् (for अब्रवीद्). D6 आगतः (for आगत°).

Colophon. —*Sarga no.* (figures, words or both): D6–7.10.11 T1.2 G M 20; T3 19. —After colophon, G M1.2.5 conclude with श्रीरामाय नमः.

—(l. 87) T3 G2 Cvp महोदधौ, G1 यथाविधि; Cv as above (for महोदधेः). —M3 transp. l. 88 and l. 89. —(l. 88) D6.10.11 भुजग-; Cr.m g as above (for भुजग-). —(l. 89) D10.11 सदा (for पुरा). —(l. 90) D7.10.11 मणि (for वर-). —(l. 91) G1 अभि-; G2 Ck परि, Cv.m.g.t as above (for अभि-). G2 अनेकशः; Cg.t as above (for °धा). ‡ Cr: रामस्य एकदारव्रतत्वात् परमनारीणामिति बहुवचनेन श्वश्र्वादयो विवक्षिताः ।, so also Cm.g k.t. ‡ —(l. 92) D6 T3 -[अ]गुरुभिश्च (for -[अ]गरुभिश्च). *D6.7.10.11* अभि- (for अधि-). D10.11 सेवित (for -वासितम्). —G3 reads l. 93 thrice. —(l. 93) *D6.7.10.11 G2 (three times)* Cv -प्रकाशैश्च, Cr k as above (for -प्रतीकाशैश्). —D6 om. (hapl.?) from चन्दनैर् up to तक्षक in l. 95. G3 (first and second time) अधिवासितं, M3 चाप° (for उपशोभितम्). ‡ Cv: बालसूर्यप्रकाशैरिति विशेषणसामर्थ्याद् द्वितीयचन्दनशब्दः कुङ्कुमपरः ।, so also Cm g.k.t. ‡ —(l. 94) M3 सेवितं (for शोभितं). —(l. 95) D6 T3 यथा भोग, G2 (ए)व भोगाभं (for [ए]व सम्भोगं). —(l. 97) D6–7.10.11 M3 सुहृदां नन्दनं दीर्घं (D3 दीर्घं); G3 सुहृ*****ं (damaged) (for the prior half). T3 संसारान्त- (for सागरान्त-). —(l. 98) D6 अस्यतोऽथ, T3 अस्यता तु, Cr as above (for अस्यता च). D6 T3 M3 -विहत- (for -विहत-). M3 [illegible]

## 16

After 6.15 D5-7.10.11 S ins

निमित्तानि निमित्तज्ञो दृष्ट्वा लक्ष्मणपूर्वज ।
सौमित्रिं संपरिष्वज्य इदं वचनमब्रवीत् ।
परिगृह्योदकं शीतं वनानि फलवन्ति च ।
बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण ।
लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् । [5]
निबर्हणं प्रवीराणामृक्षवानररक्षसाम् ।
वाताश्च कलुषा वान्ति कम्पते च वसुंधरा ।
पर्वताग्राणि वेपन्ते पतन्ति च महीरुहाः ।
मेघाः क्रव्यादसंकाशाः परुषाः परुषस्वनाः ।
क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः । [10]
रक्तचन्दनसंकाशा संध्या परमदारुणा ।
ज्वलतः प्रपतत्येतदादित्यादग्निमण्डलम् ।
दीना दीनस्वराः क्रूराः सर्वतो मृगपक्षिणः ।
प्रत्यादित्यं विनर्दन्ति जनयन्तो महद्भयम् ।
रजन्यामप्रकाशस्तु संतापयति चन्द्रमाः । [15]
कृष्णरक्तांशुपर्यन्तो लोकक्षय इवोदितः ।
ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषः सुलोहितः ।
आदित्ये विमले नीलं लक्ष्म लक्ष्मण दृश्यते ।
रजसा महता चापि नक्षत्राणि हतानि च ।
युगान्तमिव लोकानां पश्य शंसन्ति लक्ष्मण । [20]
काकाः श्येनास्तथा गृध्रा नीचैः परिपतन्ति च ।
शिवाश्चाप्यशिवान्नादान्नदन्ति सुमहाभयान् ।
शैलैः शूलैश्च खड्गैश्च विसृष्टैः कपिराक्षसैः ।
भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ।
क्षिप्रमद्यैव दुर्धर्षां पुरीं रावणपालिताम् । [25]
अभियाम जवेनैव सर्वतो हरिभिर्वृताः ।
इत्येवमुक्त्वा धर्मात्मा धन्वी संग्रामहर्षणः ।

—$V_1$ ins

समाप्तं चेदं सुन्दरकाण्डम् ।

—$B_2$ ins

सुन्दरकाण्डं समाप्तं । तस्यानंतरं लङ्काकाण्डं भविष्यति । श्री गुरु । श्री श्रीरामो जयति । श्री श्रीशिवो जयति ।

—$B_3$ ins

समाप्तमिदं सुन्दरकाण्डं ।
वाल्मीकिगिरिसंभूता रामायणमहानदी ।
पुनाति भुवनं या सा रामसागरगामिनी ।
हनुमते नमः । श्रीरामो जयति । गुरवे नमः ।

—$B_4$ ins

समाप्तं चेदं सुन्दरकाण्डमिति । अस्यानन्तरं लङ्काकाण्डमिति ।
श्री श्रीरामचन्द्राय नमः ।

—$D_1$ ins

रामः । समाप्तं लङ्कापर्व ।

वाल्मीकिवदनारविन्दगलितं पद्यं परं पावनं
पुण्यं वाग्मृतं पिबन्तु निपुणा ये श्रीरामभक्ताः ।
विष्णोः सच्चरितं चराचरगुरो रामायणं सादरं
तेषां श्रीभवने गवलक्षितिकला नश्यन्ति चाराधयः ।

—$D_3$ ins

संवत् १७८७ अक्षीदुन्दुभिवसुसरयोगाते अब्दे । आषाढ शुक्ल ६ चन्द्रवारे । श्रीरामाय नमः ।

—$D_4$ ins

सुन्दरकाण्डं समाप्तं । शुभमस्तु । श्रीराघवाय नमः । श्री । श्री । श्री ।

—$D_5$ ins

समाप्तमिदं सुन्दरकाण्डं संपूर्णं । शुभमस्तु । मङ्गलं ददात् ।

यत्र यत्र रघुनाथकीर्तनं
तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं
मारुतिं नमत राक्षसान्तकम् ।

संवत् १८३७ शके १७०२ पौषे कृष्णपक्षे १४ रविवासरान्वितायां २९ ज्येष्ठानक्षत्र १९।४६ गण्डयोग ३०।१२ ववकरणे २० लिखितं च श्री दुबे वगीराय कनोजिया हरोली शुभस्थान । श्रीराम श्रीराम राम श्रीराम राम श्रीराम राम ।

यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ १ ।

श्रीरामो जयति ।

## 16

(l 2) Note hiatus between the two halves $D_7$ $T_3$ म (for सं) —(l 4) $T_1$ संविभज्येमं $T_3$ व्यूहे $C_m$ g k as above (for व्यूह्य) —(l 6) $D_{10\ 11}$ मर्दनं —(l 8) $T_3$ महीरुहाः $C_m$ as above (for च मही°) —(l 10) $D_5$ मिश्रं (for मिश्रं) —(l 12) $D_7$ ज्वलितः $G_{1\ 3}$ $M_{1\ 2}$ ज्वलत्स —(l 13) $D_7$ दीनस्वरा (for °स्वराः) $G_3$ सर्वे ते (for सर्वतो) —(l 14) $T_{2\ 3}$ महाभयं —(l 15) $D_5$ $M_3$ अप्रकाशश्च $T_3$ अप्रशस्तं च (for अप्रकाशस्तु) —(l 16) $G_3$ कृष्णो (for कृष्ण) —(l 17) $D_7$ $M_{1\ 2}$ [ऽ]प्रकाशश्च (for ऽप्रशस्तश्च) $D_{10\ 11}$ तु (for सु) —(l 18) $D_5$ reads from के up to ते in marg $T_1$ (ed) लक्ष्म नीलं (by transp) $G_{1\ 2}$ लक्ष्यते $C_g$ as above (for दृश्यते) —(l 19) $D_7$ [आ]वृतानि, $G_{1\ 2}$ वृतानि $C_k$ t as above (for हतानि) —(l 20) $G_2$ लोकस्य and शंसति (for लोकानां and शंसन्ति) —(l 21) $D_7$ नीचैर्गृध्रा (by transp), $D_{10\ 11}$ नीचा गृध्राः $C_g$ as above (for गृध्रा नीचैः) —(l 22) $D_{7\ 10\ 11}$ $T_2$ $M_3$ [अ]शुभान् (for [अ]शिवान्) $G_1$ पतन्ति महाभयात् $M_{1\ 2}$ निनदन्ति महास्वनाः (for the post half) —(l 23) $D_6$ शूलैः शैलैः $T_1$ शूलैः सालैः $G_3$ शूलैः शैलैश्च (for शैलैः शूलैश्च) $D_{10\ 11}$ विसृष्टैः (for विसृष्टैः) $T_3$ विसृष्टैः खड्गैश्च (by transp) —(l 24) $M_3$ कर्दमे $C_g$ कर्दमाः (as above) —(l 26) $D_7$ अभियामो $D_{7\ 10\ 11}$ सर्वैर्हरिभिरावृताः (for the post half) $T_2$ अभियाम जवे··· ··· हरिभि[र्वृ]ता (damaged) —(l 27) $D_{7\ 10\ 11}$ इ इति स

प्रतस्थे पुरतो रामो लङ्कामभिमुखो विभुः ।
सविभीषणसुग्रीवास्ततस्ते वानरर्षभाः ।
प्रतस्थिरे विनर्दन्तो निश्चिता द्विषतां वधे । [30]
राघवस्य प्रियार्थं तु धृतानां वीर्यशालिनाम् ।
हरीणां कर्मचेष्टाभिस्तुतोष रघुनन्दनः ।

Colophon

सा वीरसमिती राज्ञा विरराज व्यवस्थिता ।
शशिना शुभनक्षत्रा पौर्णमासीव शारदी ।
प्रचचाल च वेगेन त्रस्ता चैव वसुंधरा । [35]
पीड्यमाना बलौघेन तेन सागरवर्चसा ।
ततः शुश्रुवुराक्रुष्टं लङ्कायाः काननौकसः ।
भेरीमृदङ्गसंघुष्टं तुमुलं लोमहर्षणम् ।
बभूवुस्तेन घोषेण संहृष्टा हरियूथपाः ।
अमृष्यमाणास्तं घोषं विनेदुर्घोषवत्तरम् । [40]
राक्षसास्तत्प्लवगानां शुश्रुवुस्तेऽपि गर्जितम् ।
नर्दतामिव दृप्तानां मेघानामम्बरे स्वनम् ।
दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् ।
जगाम मनसा सीतां दूयमानेन चेतसा ।
अत्र सा मृगशावाक्षी रावणेनोपरुध्यते । [45]
अभिभूता ग्रहेणेव लोहिताङ्गेन रोहिणी ।
दीर्घमुष्णं च निश्वस्य समुद्वीक्ष्य च लक्ष्मणम् ।
उवाच वचनं वीरस्तत्कालहितमात्मनः ।
आलिखन्तीमिवाकाशमुत्थितां पश्य लक्ष्मण ।
मनसेव कृतां लङ्कां नगाग्रे विश्वकर्मणा । [50]
विमानैर्बहुभिर्लङ्का संकीर्णातिविराजते ।
विष्णोः पदमिवाकाशं छादितं पाण्डुरैर्घनैः ।
पुष्पितैः शोभिता लङ्का वनैश्चैत्ररथोपमैः ।
नानापतगसंघुष्टैः फलपुष्पोपगैः शुभैः ।
पश्य मत्तविहंगानि प्रलीनभ्रमराणि च । [55]
कोकिलाकुलषण्डानि दोधवीति शिवोऽनिलः ।
इति दाशरथी रामो लक्ष्मणं समभाषत ।
बलं च तद्वै विभजच्छास्त्रदृष्टेन कर्मणा ।
शशास कपिसेनां तां बलमादाय वीर्यवान् ।
अङ्गदः सह नीलेन तिष्ठेदुरसि दुर्जयः । [60]
तिष्ठेद्वानरवाहिन्या वानरौघसमावृतः ।
आस्थितो दक्षिणं पार्श्वमृषभो वानरर्षभः ।
गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः ।
तिष्ठेद्वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः ।
मूर्ध्नि स्थास्याम्यहं यत्तो लक्ष्मणेन समन्वितः [65]
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।

रम (for धर्मात्मा च श्री) D7 10 11 G1 3 M1 2 6 धर्षण —(l 29) D7 10 11 सर्वे (for ततस्) —(l 30) D10 11 Ck t धृतानां Cg निश्चिता (as above) T3 पथि (for वधे) —(l 31) D6 T3 सतानां D10 11 सुतरां T1 वीराणां T2 यतानां Cg as above (for धृतानां) T1 शौर्य (for वीर्य) —(l 32) D6 T1 M3 हरि(M3 रघु)पुंगव (for रघुनन्दन)

Colophon —*Sarga no* (figures words or both) D6–7 10 11 T1 2 G M 23 T3 damaged —After colophon T3 concludes with श्रीरामा नीर्नेन्कि G M1 2 6 with श्रीरामाय नमः

—Before l 33 T3 ins in marg सेनाख्यम् —(l 34) G3 पूर्णमासीव शर्वरी (for the post half) —(l 35) D7 विचचाल सा G1 तत्र चैव (for त्रस्ता चैव) —(l 36) D6 महा (for तेन) —(l 37) T3 आक्रोश (for आक्रुष्ट) D7 11 [illegible] G3 ते वनौकसः —(l 38) D6 8 S रोम (for लोम) —(l 40) D10 11 तद् (for तं) M3 घोषमुत्तमम् —(l 41) D7 ते M1 तु (for तत्) D6 T1 M3 च (for ते) D7 च (for पि) —(l 42) D6 T3 नर्दताम् —(l 44) G1 M1 2 सहसा (for मनसा) —(l 45) T1 Cv तत्र Cm g t as above (for अत्र) G3 [अ]थो Cv m g as above (for सा) —D11 tran p l 47 and 49 —(l 47) D6 8 T3 G2 3 M1 2 सिद्धि(D6 °द्धि)मस्य G1 M1–3 समुद्वेक्ष्य —(l 48) G2 3 वाक्यं (for वीरस्) —(l 49) M1 2 उच्छ्रितां (for उत्थितां) —(l 50) D7 [ए]व (for [इ]व) ♣ Cv मनसेव कृतां लङ्का-मित्रे विश्वकर्मणेति पाठः ♣ —(l 51) T1 सन्नकीर्णा (for संकीर्णा) D7 G3 M1 हि विराजते D10 11 रचिता पुरा G1 M1 2 [अ]भिराजते G1 प्रतिभाति M3 पुरि राजते (for [अ]तिविराजते) —(l 52) D6 8 T1 G M पाण्डरैर् D7 10 11 T3 Ct पांडुभिर् Cm as above (for पाण्डुरैर्) —(l 53) M1 2 शोभते —After the prior half G3 repeats erroneously from the post half of l 50 up to the prior half of l 53 —M1 om from the post half up to the prior half of l 56 D6 10 11 M3 चित्र (for चैत्र) —(l 54) D6 M3 पतग M3 विहग (for -पतग) D6 11 -संघुष्टैः T3 पुष्पोत्कैः T3 मूलैर्नैः (for पुष्पोपगैः) G3 पुष्पोपगफलोपगैः (for the post half) ♣ Cg फलभूतानि पुष्पाणि यासां ता फलपुष्पा मल्लिकादय ताभिरुपगम्यन्त इति तथा । अतो न पुष्पितैरित्यनेन पौनरुक्त्यम् ♣ —(l 56) D6 7 10 -खण्डानि (for षण्डानि) M3 दोधूयति, Cm g t नोधवीति (as above) D6 8 T वनं पुष्पवनानि च (for the post half) —(l 58) D7 10 11 तत्र (for तद्वै) D6 8 T M3 विभजन् D7 G3 -न्यगमच्च G3 -व्ययमच्च Ck t विभजच्च (as above) ♣ Ck t विभजद्विभजन् ♣ —(l 59) D6 8 T G1 M1 2 कपिसेनायां (T3 M3 °यां M1 °नां) D10 M1 2 Ck t बलात् Cm g as above (for बलम्) —(l 60) M3 वीर्यवान् (for दुर्जय) —M1 3 om (hapl) ll 61–63 —(l 61) After तिष्ठेत् D6 erroneously reads from -नरवाहिन्या in l 70 up to the prior half of l 71 T1 वानर वाहि या —(l 62) D7 10 11 T3 G1 Ct आश्रितो M1 Cm आस्थित (for आस्थितो) D6 7 10 11 G1 आस वानर (for वानरर्षभ) —(l 64) D11 repeats the post half of l 61 in place of the post half of l 64 D10 पश्चम् Cm t as above (for पार्श्वम्) M1 समाश्रित (for मधिष्ठित) —(l 65) T3 वर्तेत M3 Cg युक्तो Ck t as above (for यत्तो) D6 8 T च संयुत G M3 समाहित (for समन्वित)

ऋक्षमुख्या महात्मानः कुक्षिं रक्षन्तु ते त्रय ।
जघनं कपिसेनायाः कपिराजोऽभिरक्षतु ।
पश्चार्धमिव लोकस्य प्रचेतास्तेजसा वृतः ।
सुविभक्तमहाव्यूहा महावानररक्षिता । [70]
अनीकिनी सा विबभौ यथा द्यौः साभ्रसंप्लवा ।
प्रगृह्य गिरिशृङ्गाणि महतश्च महीरुहान् ।
आसेदुर्वानरा लङ्कां विमर्दयिषवो रणे ।
शिखरैर्विकिरामैनां लङ्कां मुष्टिभिरेव वा ।
इति स्म दधिरे सर्वे मनांसि हरिसत्तमाः । [75]
ततो रामो महातेजाः सुग्रीवमिदमब्रवीत् ।
सुविभक्तानि सैन्यानि शुक एष विमुच्यताम् ।
रामस्य वचनं श्रुत्वा वानरेन्द्रो महाबलः ।
मोचयामास तं दूतं शुकं रामस्य शासनात् ।
मोचितो रामवाक्येन वानरैश्च निपीडितः । [80]
शुकः परमसंत्रस्तो रक्षोधिपमुपागमत् ।
रावणः प्रहसन्नेव शुकं वाक्यमुवाच ह ।
किमिमौ ते सितौ पक्षौ लूनपक्षश्च दृश्यसे ।
कच्चिन्नानेकचित्तानां तेषां त्वं वशमागतः ।
ततः स भयसंविग्नस्तेन राज्ञाभिचोदितः । [85]
वचनं प्रत्युवाचेदं राक्षसाधिपमुत्तमम् ।
सागरस्योत्तरे तीरे ब्रुवतस्ते वचनं तथा ।
यथासंदेशमक्लिष्टं सान्त्वयञ्श्लक्ष्णया गिरा ।
क्रुद्धैस्तैरहमुत्पत्य दृष्टमात्रैः प्लवंगमैः ।
गृहीतोऽस्म्यपि चारब्धो हन्तुं लोप्तुं च मुष्टिभिः । [90]
नैव संभाषितुं शक्याः संप्रश्नोऽत्र न लभ्यते ।
प्रकृत्या कोपनास्तीक्ष्णा वानरा राक्षसाधिप ।
स च हन्ता विराधस्य कबन्धस्य खरस्य च ।
सुग्रीवसहितो रामः सीतायाः पदमागतः ।
स कृत्वा सागरे सेतुं तीर्त्वा च लवणोदधिम् । [95]
एष रक्षांसि निर्धूय धन्वी तिष्ठति राघवः ।
ऋक्षवानरसंघानामनीकानि सहस्रशः ।
गिरिमेघनिकाशानां छादयन्ति वसुंधराम् ।
राक्षसानां बलौघस्य वानरेन्द्रबलस्य च ।
नैतयोर्विद्यते संधिर्देवदानवयोरिव । [100]
पुरा प्राकारमायान्ति क्षिप्रमेकतरं कुरु ।
सीतां चास्मै प्रयच्छाशु सुयुद्धं वा प्रदीयताम् ।
शुकस्य वचनं श्रुत्वा रावणो वाक्यमब्रवीत् ।
रोषसंरक्तनयनो निर्दहन्निव चक्षुषा ।
यदि मां प्रतियुध्येरन्देवगन्धर्वदानवाः । [105]
नैव सीतां प्रदास्यामि सर्वलोकभयादपि ।
कदा समभिधावन्ति राघवं मामकाः शराः ।
वसन्ते पुष्पितं मत्ता भ्रमरा इव पादपम् ।
कदा तूणीशयैर्दीप्तैर्गणशः कार्मुकच्युतैः ।
शरैरादीपयाम्येनमुल्काभिरिव कुञ्जरम् । [110]
तच्चास्य बलमादास्ये बलेन महता वृतः ।
ज्योतिषामिव सर्वेषां प्रभामुद्यन्दिवाकरः ।
सागरस्येव मे वेगो मारुतस्येव मे गतिः ।
न हि दाशरथिर्वेद तेन मां योद्धुमिच्छति ।
न मे तूणीशयान्बाणान्सविषानिव पन्नगान् । [115]
रामः पश्यति संग्रामे तेन मां योद्धुमिच्छति ।

—(l. 70) D5 11 सुविभक्त° D6 T3 M5 °भक्त, Cr g as above (for सुविभक्त) T2 महावीर्या, Cg as above (for महाव्यूहा) —(l. 71) T1 [अ]पि (for वि) G1 स्वाभ्र M1 2 अभ्र, Cv r m g as above (for साभ्र) —(l. 73) D10 11 G2 M1 2 Ck t मिमर्दयिषवो ※ Cm g विमर्दयिषव विमर्दयितु[(Cg मर्दयितु)]मिच्छव । Cg adds सन्ति द्विरावृत्ति आर्थे ※ —(l. 75) D7 10 11 हरिपुंगवा, G2 M1 2 4 °यूथपा (for °सत्तमा) —(l. 77) D4 G1 2 M2 विसृज्यताम् Cm t as above (for विमुच्यताम्) —(l. 78) D7 10 11 तु वच (for वचन) —(l. 80) D4 6 T M3 चापि (T3 °पि), M1 2 भृश (for च नि) —(l. 81) D6 रक्षाधिपम् —(l. 82) G1 वाक्यम् (for वाक्यम्) D4 T1 2 M3 अभाषत G1 उवाच ह M3 अथाब्रवीत् —(l. 83) G1 इमौ M1 2 यतौ Ct as above (for इमौ) T1 हृतौ (for सितौ) G1 लूनौ भग्नश्च D4–7 T1 दृश्यते —(l. 84) T1 वश*** (moth eaten) (for वशमागत) —(l. 85) D1 4 T तदा G1 M1–3 तथा (for तेन) —(l. 87) D7 T1 2 M1 2 4 तदा (for तथा) —(l. 88) T1 यदा (for यथा) G1 2 M1 3 5 अक्लीब Ct as above (for अक्लिष्ट) ※ Cm t सान्त्वयन्। Cg सान्त्वयम्, अहान्त्वयम्। सुग्रीवमिति शेष ※ —(l. 89) M1 क्रूद्ध (for क्रुद्ध) D7 10 T3 उत्प्लुत्य (for उत्पत्य) D10,11 G1 दृष्टमात्र —(l. 90) D4 T1 2 [अ]हमारब्धो G2 M3 [अ]विचारेण Cm t as above (for [अ]पि चारब्धो) —(l. 91) D1 11 ते (for [ए]व) G1 शक्य M3 स (for स) D10 11 M1 2 विद्यते (for लभ्यते) —(l. 94) M3 सहितो (for सहितो) —(l. 95) G3 बद्ध्वा (for कृत्वा) G2 M1 2 वरुणालय M5 लवणाम्बुधिं (for लवणोदधिम्) —(l. 96) D4 reads in marg. from रक्षांसि up to राघव —(l. 97) D4 T2 M5 मुख्यानाम्, T1 **नाम् (damaged) T2 सिंहानाम्, M1 2 सैन्यानाम् (for संघानाम्) M3 अनीकानां —(l. 98) D7 निकाशानि, G1 सकाशानां (for निकाशानां) —(l. 99) M1 2 वानराणां (for °रेन्द्र) —(l. 101) G2 पुर (for पुरा) —(l. 102) D4 7 10 11 च (for first वा) D10 11 युद्ध वापि G1 2 M3 युद्ध वास्मै (for सुयुद्धं वा) —(l. 104) D4 T2 G1 क्रोध (for रोष) G2 संरक्तनयनो —(l. 105) T1 [इ]मान् (for मां) —(l. 106) D5 M3 प्रयच्छामि —(l. 107) D4 T2 M3 माम (for सम°) D10 11 मामका राघव (by transp.) —(l. 109) M3 घोरैः (for दीप्तैः) D7 शतश D10 11 कदा शोणितदिग्धाङ्ग दीप्तैः कार्मुकविच्युतैः —(l. 110) D4 10,11 T1 2 M3 आदीपयिष्यामि (all except M3 with hiatus) M3 उल्काभिर् —(l. 111) D4 तत्रास्य, G1 तस्यास्य (for तच्चास्य) D4 यत्नम् (for बलम्) D11 आदाय; T1 आयास्ये (for आदास्ये) —(l. 113) D4 (both places) [ए]व (for [इ]व) D7 10 11 T1 M1 2 4 बल (for गति) —(l. 114) D4 T1 [ए]व D7 10 11 च, G1 2 [ए]तद्, G2 M1 2 3 तु (for हि) —T3 om. (hapl.) l. 115–116. —(l. 118) T1 शरकोपे; T1

न जानाति पुरा वीर्यं मम युद्धे स राघवः ।
मम चापमयीं वीणां शरकोणप्रवादिताम् ।
ज्याशब्दतुमुलां घोरामार्तगीतमहास्वनाम् ।
नाराचतलसंनादां तां ममाहितवाहिनीम् । [120]
अवगाह्य महारङ्गं वादयिष्याम्यहं रणे ।
न वासवेनापि सहस्रचक्षुषा
युधास्मि शक्यो वरुणेन वा पुनः ।
यमेन वा धर्षयितुं शराग्निना
महाहवे वैश्रवणेन वा स्वयम् । [125]

Colophon

17

After 6.19.27, Ś Ñ V2.3 B D6(marg.).8.11.12 ins.:

अत्रैव च मया प्राप्तश्चागमो वानरेषु वै ।
प्रजापतेः किल पुरा जातानिद्रं रजस्तदा ।
वामेक्षणेऽपतत्तेन दृष्ट्वा किमिदमैक्षत ।
वामेनादाय हस्तेन क्षिप्तं दूरं पपात तत् ।
मनसा चिन्तितं तेन किमस्मात्प्रभविष्यति । [5]
तत्रापि तरसा भामा फेनबुद्बुदसप्रभा ।
उत्थिता विग्रहवती नारी कमललोचना ।
चन्द्रबिम्बानना बाला विद्युत्तरललोचना ।
नैव देवी न गन्धर्वी नासुरी न च पन्नगी ।
तादृग्रूपवती दृष्टा स्वयमेव स्वयंभुवा । [10]
लोकपालास्ततो दृष्ट्वा तं देशं समुपागताः ।
रविस्तत्राब्रवीद्वाक्यमुपसृत्य प्रजापतिम् ।
कस्यैषा केन कार्येण संप्राप्तेह शुभानना ।
पुरीं भोगवतीं त्यक्त्वा नागकन्या किमागता ।
सिद्धिर्बुद्धिस्तथा लक्ष्मीः प्रभा पुष्टिः सरस्वती । [15]
असौ रूपमवष्टभ्य चोत्थिता जगतां वरा ।
प्रजापतिस्तदा तत्र रवेश्रावयत्कथाम् ।
ततोऽक्षिरजसो जातां स्निग्धां स्निग्धेन चक्षुषा ।
भास्करो भास्कराभो तामुपगुह्य गतस्ततः ।
कदाचिद्वीक्ष्य तां कन्यां रूपयौवनदर्पिताम् । [20]
स्थितो मन्दरपृष्ठेषु रविर्वचनमब्रवीत् ।

---

शरौघेण (for शरकोण-). D7 M1.2 -प्रवादिता. D6.10.11 M3 Cm g.t शरकोणैः प्रवादिता (for the post. half). —D6 reads in marg. l. 119. —(l. 119) D6.8 T1.2 -घोषतुमुलां. T3 भीमाम् (for घोराम्). D7 T3 G1.3 M3 Cv.m.g आर्तभीत-; D10.11 आर्तगीतां; G2 आर्तभीम-; M5 मत्तगीत-; Ct आर्तगीत- (as above). T3 -रवस्वनां. —(l. 120) D6.8 T1.2 मम च; D7 G2 तां महा-; D10.11 Ct नदीम्; Cv.m.g as above (for तां मम). D6 T1.2 G2.3 M1.2 Cr -वाहिनी. —(l. 121) M3 नादयिष्यामि. —(l. 123) D6.7.10.11 T2 युद्धे; M3 यथा (for युधा). D10.11 M3 स्वयं (for पुनः). —(l. 124) G2 यथा, M3 क्षुमो (for शर-). —(l. 125) M3 पुनः (for स्वयम्).

Colophon. —*Sarga no.* (figures, words or both): D6-7.10.11 T1.2 G M 24; T3 23. —After colophon, G M1.2 conclude with श्रीरामाय नमः; M3 with श्रीरामचन्द्राय नमः.

17

V3 om. l. 1–3. —(l. 1) Ś D8.12 यथा चैव; Ñ1 V3 B3 तत्र चैव, B1 स्वैव च; D11.12 ततोश्चैव. Ś D8.12 तथा (for मया). Ñ V3 B3.4 D8.12 आगमो (for चागमो). Ñ2 च (for वै). B4 वानरेश्वरे:. —(l. 2) Ś V3 B1.3 D8.12 तथा (for तदा). —(l. 3) Ñ V2 B वामाक्षिमसृत वै( B4 °दसरते )न, D8.12 वामेक्षणं क्षितं तेन (for the prior half). Ñ1 V3 B1-3 दृष्ट्वा स्वसि वैकृत, Ñ2 B4 कृत चक्षुषि( Ñ2 °ष्टु ) वैक्षत (for the post. half). —(l. 4) Ñ2 V2 B D8 क्षिप (for क्षिप्त). Ñ V2.3 B दूरे. V2.3 6; B1 D12 च (for तत्). B2.3 -त्य( B4 प्र )पातयत्. —(l. 5) Ñ2 B4 [अ]चिन्तित (for चिन्तित). Ś2 D8.12 प्रभविष्णुः; Ñ2 संभविष्यति (for प्रभविष्यति). B4 हिमराद्रं भविष्यति (for the post. half). —(l. 6) Ñ1(m. also चचला).2 V3 B D12 तरला (for तरसा). B1 -संनिभा; B3 -सत्प्रभा, B4 -सप्रभा, D12 -सुप्रभा. —(l. 7) V3 B2 [अ]विरूपवती (for विग्रहवती). B4 विग्रहवती स्वाधारी (for the prior half). B4 तस्मिन् (for नारी). —(l. 8) B4 -मुहल- (for तरल-). —(l. 9) Ś D8.12 न देवी न च (for नैव देवी न). Ś2 च न (by transp.). —(l. 10) Ñ V3 B1.2 नेदृग्, V3 नैतद् (for तादृग्). Ñ1 B1.3 दृष्टा (for दृष्टा). B3.4 नैव तादृग्रूपवती स( B4 तु )लान्या स्त्री स्वयंभुवा. —(l. 11) Ñ1 B3 तथा, B1.4 तु तां (for ततो). D8.12 दृष्ट्वास् (for दृष्ट्वा). Ñ V2.3 B तं प( B4 तत्प्र )देशमुपागताः (for the post. half). —(l. 13) B1.4 वा (for [ए]षा). —(l. 14) D8 अथर' (for आगता). —(l. 15) Ñ1 V3 D8.12 धृतिस्; Ñ2 श्नस्; B3 ऋद्धिस्; B2 वृद्धिस् (for बुद्धिस्). B4 ऋद्धि (for प्रभा). D12 लक्ष्मी (for पुष्टिः). Ñ1 V2.3 पुण्या( V3 सुधा ) पुष्टि प्रभाकरी; B1.4 प्रभा तुष्टि प्रभाकरी (for the post. half). —(l. 16) Ñ V2.3 B1-3 आसां; B4 तासां; D12 आसीद् (for असौ). D12 (with hiatus) उत्थिता (for चोत्थिता). Ñ V2.3 B D8 (with hiatus) उत्थिता जगतीतलात् (D8 °वीकृते) (for the post. half). —Ś1 D8 om. (hapl.) l. 17–19. Ś2 D8.12 om. l. 17. —(l. 17) Ñ2 ततस्; D12 तथा (for तदा). Ñ1 V2 B3 रविम् (for रवेर्). Ñ2 आश्रावयद्. —(l. 18) Ś2 D12 ततो वै; V3 वामोत्था, B2 अतोक्षि-; D8 ततोक्ष (for ततोऽक्षि). Ś2 B1 D8.12.13 -रजसा. L (ed.) जाता (for जातां). V3 दृष्ट्वा (for स्निग्धां). Ñ2 तेजसा (for चक्षुषा). Ś2 L (ed.) स्निग्धमाजनसप्रभा( Ś2 °भां ), D8.12.13 स्निग्धा( D8 °ग्ध )भजनचक्षुषा (for the post. half). —(l. 19) Ś2 Ñ1 V2.3 D8.12 उपगृह्य (for °गुह्य). Ś2 ततो गतः (by transp.). Ñ2 B2 गतास्ततः, V3 B1 D8.12 ततस्ततः; B2 [आ]गतस्ततः. —(l. 20) Ñ V2 B2.3 D8.12 अथ तां; V3 आगता, B1 त्वथ तां (for वीक्ष्य तां). Ñ1 V2.3 B1-3 गर्विता (for -दर्पिताम्). B4 प्रजापतेस्तु कन्यायां स ययौ कामदर्पितः. —(l. 21) Ñ V2.3 B2.3 स्नातां (for स्थितो). Ñ V2.3 B D12 -पृष्ठे तु. B4 रविस्तामब्रवीद्वचः (for the post.

तूष्णींकृत्य च तद्रक्षः सोऽब्रवीत्परुषं वचः ।
लोकनाथस्य रामस्य सखा दासोऽस्मि राक्षस ।
न मया मोक्ष्यसेऽद्य त्वं पार्थिवेन्द्रस्य तेजसा । [20]
इत्युक्त्वा सहसोत्पत्य पुप्लुवे तस्य चोपरि ।
आकृष्य मुकुटं चित्रं पातयित्वापतद्भुवि ।
समीक्ष्य तूर्णमायान्तमाबभाषे निशाचरः ।
सुग्रीव त्वं परोक्षं मे हीनग्रीवो भविष्यसि ।
इत्युक्त्वोत्थाय तं क्षिप्रं बाहुभ्यामाक्षिपत्तले । [25]
कन्दुवत्तं समुत्थाय बाहुभ्यामाक्षिपद्धरिः ।
परस्परं स्वेदविदिग्धगात्रौ
परस्परं शोणितदिग्धदेहौ ।
परस्परं श्लिष्टनिरुद्धचेष्टौ
परस्परं शाल्मलिकिंशुकाविव । [30]
मुष्टिप्रहारैश्च तलप्रहारै
रत्निघातैश्च कराग्रघातैः ।
तौ चक्रतुर्युद्धमसह्यरूपं
महाबलौ राक्षसवानरेन्द्रौ ।
कृत्वा नियुद्धं भृशमुग्रवेगौ [35]
कालं चिरं गोपुरवेदिमध्ये ।
उत्क्षिप्य चाक्षिप्य विनम्य देहौ
पादक्रमाद्गोपुरवेदिलग्नौ ।
अन्योन्यमापीड्य विलग्नदेहौ
तौ पेततुः सालनिखातमध्ये । [40]
उत्पेततुर्भूतलमस्पृशन्तौ
स्थित्वा मुहूर्तं त्वभिनिश्वसन्तौ ।
आलिङ्ग्य चालिङ्ग्य च बाहुयोक्त्रैः
संयोजयामासतुराहवे तौ ।
संरम्भशिक्षाबलसंप्रयुक्तौ [45]
संचेरतुः संप्रति युद्धमार्गैः ।
शार्दूलसिंहाविव जातदर्पौ
गजेन्द्रपोताविव संप्रयुक्तौ ।
संहत्य चापीड्य च तावुरोभ्यां
तौ पेततुर्वै युगपद्धरण्याम् । [50]
उद्यम्य चान्योन्यमधिक्षिपन्तौ
संचक्रमाते बहुयुद्धमार्गैः ।
व्यायामशिक्षाबलसंप्रयुक्तौ
क्लमं न तौ जग्मतुराशु वीरौ ।

---

—D5 om l. 18 —(l. 18) T1 तु (for च) G3 रक्ष —(l. 19) D5 reads रामस्य in marg. T1 G1 रावण (for राक्षस) —(l. 21) D7 8 [उ]त्प्लुत्य, M1 2 [उ]त्पाय (for [उ]त्पत्य) —(l. 22) D5 T1 2 G M मकुटं, Ct as above (for मुकुटं). D7 9-11 पातयामास तद्भुवि G1 पादेनाताडयद्भुवि (for the post half) —(l. 23) D7 9-11 बभाषे तं (for आबभाषे) —(l. 24) D6 7 10 11 T2 M3 सुग्रीवस्त्वं G1 परोक्षे, G3 समक्षं (for परोक्षं) —(l. 25) G2 तं क्षिप्रं T3 इत्युक्त्वा च स सुग्रीव (for the prior half) G1 प्राक्षिपत् (for आक्षि°) G2 3 M3 बली (for तले) —D5 T1 repeat l. 26 after l. 66. —(l. 26) D6 7 9-11 T2 3 Ct कन्दुवत् D9-11 Ct स, T3 तु (for तं) T1 समुत्थाय G1 प्राक्षिपद्, Ct as above (for आक्षिपद्) —(l. 27) D11 M विदग्ध, G निरुद्ध (for विदिग्ध) —(l. 28) D5 T1 2 G3 M3 Cg दिग्ध, D7 दीप्त, Ct as above (for रक्त) —(l. 29) D6 T3 क्लिष्ट, Ct as above (for श्लिष्ट) D8 T2 3 विरुद्ध, Cg t as above (for निरुद्ध) —(l. 30) D6 8 T M3 किंशुकौ यथा, G1 किंशुकशाल्मली, Cg t as above (for °काविव) G2 M5 परस्परं किंशुकशाल्मली यथा —(l. 31) D5 om (hapl.) श्च तलप्रहारै —(l. 32) D6 8 पातैश्च, D11 om (for घातैश्च) D8 M1 2 चरणाग्र (for च कराग्र) D7 घातैः, Cm g k t as above (for घातैः) —(l. 33) D7 मन्यमरूपौ G2 °वेगौ M1 2 °वेग Cr m g t °रूप (as above). —(l. 34) D8 T2 G3 M1-3 वानरराक्षसेन्द्रा —(l. 35) D5 T1 सयुद्ध G3 M5 च युद्ध Cv as above (for नियुद्ध) D9 M1 3 रूपौ (for वेगौ) —(l. 37) D1 विक्षिप्य (for उत्क्षिप्य) D7 9-11 T3 M5 [उ]त्क्षिप्य (for [आ]क्षिप्य) D5 T1 M2 विनम्र (for विनम्य) —(l. 38) D5 T1 2 M5 पदक्रमात् —(l. 39) T2 M3 Cg आविध्य, G2 3 M5 आलिंग्य (for आपीड्य) M1 2 विलीनगात्रौ Cg as above (for विलग्नदेहौ) —(l. 40) D6 10 शाल- (for साल) D5 marg. D7 9 Cr निघातमध्ये, Cg k t as above (for निखात°) ❀ Ct 'निघात' इति पाठेऽप्ययमेवार्थः ❀ —(l. 41) D9-11 भूमितलं स्पृशन्तौ (for भूतलमस्पृ°) —(l. 42) D11 समुहूर्तं (for मुहूर्तं) D6 8 9-11 Ct निःश्वसन्तौ, M3 निस्पृशन्तौ G3 च विनिश्वसन्तौ —D10 reads l. 43 after l. 47 —(l. 43) D7 आविध्य D5 T1 G2 3 M1 2 चापीड्य, D6 T2 3 M3 Cm g चावलग्य, D7 बन्धेन M5 चाबध्य (for चालिङ्ग्य). M5 बाहुपाशैः (for °योक्त्रैः) —(45) T3 संहृष्ट, M5 संरब्ध, Cr m g k t as above (for संरम्भ) —(l. 46) D9-11 सुचेरतु (for संचे°) D6 10 T2 G3 युद्धमार्गौ D7 क्लमं न तौ जग्मतुराशु वीरौ —(l. 47) D7 9 11 जातदर्पौ (for °दर्पौ) —(l. 48) G2 न्नागाविव, Cg as above (for पोता°) G3 M5 संप्रयुक्तौ, Cr g k as above (for °युक्तौ) —(l. 49) T3 संहार्य G1 प्रहृत्य Cg as above (for संहत्य) D5 G1 संपीड्य D7 9-11 स्वेदेन Cg as above (for चापीड्य) D7 9-11 च तौ कराभ्यां M1 2 परस्परेण Cg as above (for च तावुरोभ्यां) —(l. 50) D5 T1 G M5 निपेततुर् D7 9-11 धरायां Cg as above (for धरण्याम्) ❀ Cv r निपेततुर्वै युगपद्धरण्यामिति पाठः । Cv adds वैशब्दः पादपूरणे ❀ —(l. 51) D5 T1 G1 M5 उद्यम्य Cg as above (for उद्यम्य) —(l. 52) M5 तौ गच्छेते D7 9-11 T2 3 G2 3 M5 युद्धमार्गौ Cg as above (for °मार्गैः) —(l. 53) G1 damaged for शिक्षाबलसंप्र —(l. 54) D5 G1 2 श्रम (for क्लमं) D8 तु (for तौ) D5 T1 M1 2 आहवेन, D6 T2 आशु वेगौ G3 आहवे तौ (for आशु वीरौ) —(l. 55) M3 वानर Cv as above (for वारण-) T3 (also) G3 नाडिकाभेद्; M5 न्वारणाभिद् (for वारणभेद्) ❀ Cr m वारणवारणाभे-

बाहुत्तमैर्वारणवारणाभै
निवारयन्तौ वरवारणाभौ । [55]
चिरेण कालेन भृश प्रवृद्धौ
सचेरतुर्मण्डलमार्गमाशु ।
तौ परस्परमासाद्य यत्तावन्योन्यसूदने ।
मार्जाराविव भक्षार्थे वितस्थाते मुहुर्मुहु । [60]
मण्डलानि विचित्राणि स्थानानि विविधानि च ।
गोमूत्रिकाणि चित्राणि गतप्रत्यागतानि च ।
तिरश्चीनगतान्येव तथा वक्रगतानि च ।
परिमोक्ष प्रहाराणा वर्जन परिधावनम् ।
अभिद्रवणमाप्लावमास्थान च सविग्रहम् । [65]
परावृत्तमपावृत्तमवद्रुतमवप्लुतम् ।
उपन्यस्तमपन्यस्त युद्धमार्गविशारदौ ।
तौ सचेरतुरन्योन्य वानरेन्द्रश्च रावण ।
एतस्मिन्नन्तरे रक्षो मायाबलमथात्मन ।
आरब्धुमुपसपेदे ज्ञात्वा त वानराधिप । [70]
उत्पपात तदाकाश जितकाशी जितक्लम ।
रावण स्थित एवात्र हरिराजेन वञ्चित ।
अथ हरिवरनाथ प्राप्य सग्रामकीर्ति
निशिचरपतिमाजौ योजयित्वा श्रमेण ।
गगनमतिविशाल लङ्घयित्वार्कसूनु [75]
र्हरिगणबलमध्ये रामपार्श्व जगाम ।
इति स सवितृसूनुस्तत्र तत्कर्म कृत्वा
पवनगतिरनीक प्राविशत्सप्रहृष्ट ।
रघुवरनृपसूनोर्वर्धयन्युद्धहर्ष
तरुमृगगणमुख्यै पूज्यमानो हरीन्द्र । [80]

Colophon

## 19

After 6 31 17 D3 ins

राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ।
रावणोऽपि महातेजा क्रोधविस्फारितेक्षण ।
अगच्छत्सहसा क्रुद्ध सर्वसैन्येन सवृत ।
गजाश्वरथसकीर्णा राक्षसैर्मेदिनी कृता ।
उत्तरा दिशमास्थाय प्रययौ रावणो युधि । [5]
हस्त्यश्वरथपत्तीना नद्ता नि स्वनोऽभवत् ।
सहयै काञ्चनापीडैर्गजैश्च समलकृतै ।
रथैश्चादित्यसकाशै कवचैश्च मनोहरै ।
नीलपीतसुरक्ताभि पताकाभिरलकृता ।
राक्षसा भूरिविक्रान्ता भूषिता घोरदर्शना । [10]
वादित्रेण विचित्रेण वादयन्त इतस्तत ।
विनिर्ययुर्महानादैर्नादयन्तो महीतलम् ।
निर्यान्त राक्षसानीक सप्रेक्ष्य सुदुरासदम् ।
ऋक्षवानरयूथाश्च हृष्टा युद्धाभिकाङ्क्षिण ।
अभ्यधावस्तदा घोरा राक्षसाना बल प्रति । [15]
वानरै राक्षसाना च महायुद्धमवर्तत ।
प्रभिन्नकरटैर्घोरैर्द्वन्द्विभिश्च महागिरि ।
स्वलकृतैर्बद्धतूणैर्नद्भिश्च महास्वनै ।
नानाशस्त्रधरा धीरा मेघा इव सविद्युत ।
शैलशृङ्गैश्चापि भूरुहैर्विपुलैस्तथा । [20]
अन्योन्यवद्वैराणा परस्परजयैषिणाम् । (sic)
तुरगखुरविध्वस्त रथनेमिसमुद्धतम् ।
कण्ठानरागीच्छोधानां चक्षूषि च महीरज । } 6.34.10
ततो युद्ध महाभीम हरिराक्षससकुलम् ।

(Cm वारणा गजा ) तेषां वारणानि अगलानि तत्सदृशे । Cg वार्यन्ते एभिरिति वारणा आलानस्तम्भा । Ck वारयन्त्येभि प्रतिगजानिति व्युत्पत्त्या हस्तवाची वारणशब्दो द्वितीय । करिकराभैरित्यर्थ । Ct वारयन्त्येभि प्रतिगजानिति वारणो महागज । द्वितीयवारणशब्द करिहस्तवाची ॥ —(l 56) D3 निर्वारयन्तौ D8 11 M1 3 Ct पर (for वर ) —(l 57) M3 Cg तु स (for भृश) D8 11 T1 M3 प्रवृत्तौ Cg as above (for प्रवृद्धौ) —(l 59) M3 मत्ताव (for यत्ताव) —(l 60) D11 मार्जारस् D8 11 Ck t [s]वतस्थाते T2 उत्तस्थाते Cv r g as above (for वित°) —(l 62) D7 गोमूत्राणि च D8 11 Cv t गोमूत्रकाणि D7 M1 3 चक्राणि Ct as above (for चित्राणि) —(l 63) D1 T1 M3 चक्रगतानि Cm g k t as above (for वक्र°) G3 [अ]पि (for च) —(l 64) D8 T3 G1 प्रहरण Cm g k t as above (for प्रहाराणां) —(l 65) D9 G1 अभिद्रावणम् D9 आक्षेपम् G3 आस्थानम् Cr g as above (for आप्लावम्) D7 10 11 M1 3 Ct अवस्थान G3 आप्लुत च Cm g as above (for आस्थान च) T3 सविग्रह —(l 66) G3 om (hapl ) M3 उपावृत्तम Cr m g k t as above (for अपा°) D7 अव दृप्तम्, D10 11 G3 M1 2.3 Ct अपद्रुतम् T3 अवदलम् Cv r m k as above (for अवद्रुतम्) T3 उत्प्लुतमप्लुत (for the post half) —(l 67) D1 अपन्यस्तौ (for °न्यस्त) —(l 68) D8 तत्र स D10 11 तौ वि G1 2 वीरौ (for तौ स°) G3 सचेरतुस्तावन्योन्य (for the prior half) G3 वारण (meta ) (for रावण ) G1 2 राक्षसेन्द्रकपीश्वरौ (for the post half) —(l 69) D1 मायाबलमदर्शयत् (for the post half) —(l 70) G1 2 तज्ज्ञात्वा M1 3 ज्ञात्वा तद् (for ज्ञात्वा त) M3 वानरोत्तम —(l 71) D1 तथा (for तदा) T3 गतक्लम Cg as above (for जित°) —(l 73) D8 11 प्राप्तसग्रामकीर्तिर् D1 प्राप्य कीर्ति महत्तमां (for प्राप्य सग्रामकीर्ति) —(l 75) D9 om (hapl ) from तु up to 30 l 79 —(l 76) D7 गगनम् T1 बलगण- (by transp.) G1 M3 वरगण G3 बलक (for गणबल ) —(l 77) D1 11 स इति (by transp ) T3 इति (for इति स) —(l 78) D7 सप्रहृष्ट (for °हृष्ट ) —(l 79) G3 M1 2 दशरथ (for रघुवर ) ॥ Cv रघुवरनृपसूनोरिति पाठ ॥ —(l 80) T3 -गणमृग (by transp ) (for मृगगण ) G1 हरीन्द्रै M3 [s]भिज्ञ (for हरीन्द्र )

Colophon —*Sarga name* D1 सुग्रीवरावणयुद्ध रामस्थापन —*Sarga no* (figures words or both) D8-7 10 11 T2 3 G M 40 D9 16, T1 39 —After colophon, G M1 2.3 conclude with श्रीरामाय नम

रक्षःसैन्येषु संक्रुद्धा निजघ्नुस्ते परस्परम् । [25]
सिंहनादैर्विनेदुस्ते युद्धे वानरराक्षसाः ।
ते पादपैः शिलाभिश्च चक्रुर्वृष्टिं तथोत्तमाम् ।
वानराश्चूर्णयामासुर्धावमानान्सहस्रशः ।
निजघ्नुः संयुगे क्रुद्धा हरयो राक्षसर्षभान् ।
केचिद्विद्राव्य रक्षांसि गजवाजिगतान्यपि । [30]
निजघ्नुः सहसा रक्षैर्यातुधानान्वलीमुखाः ।
शैलशृङ्गैर्विभिन्नाङ्गा मुष्टिभिर्भ्रान्तलोचनाः ।
चेलुः पेतुश्च नेदुश्च तत्र राक्षसपुंगवाः ।
निहतान्राक्षसान्दृष्ट्वा हतशेषा निशाचराः ।
लङ्काभिमुखं धावन्तो विद्रुता राक्षसा युधि । [35]
अपरे ये च दुर्धर्षा येऽपि सुस्था निशाचराः ।
ते सर्वे चालयामासुर्बाहुना राक्षमाहवे ।
तत्र प्रज्वलिताग्रेषु रथेषु रथिनां वराः ।
आगच्छन्सहसा क्रुद्धा यत्र युद्धमवर्तत ।
कुञ्जरैस्तु सुसंनद्धैः पदातैश्च सहस्रशः । [40]
नानाकवचसंनद्धा नानाप्रहरणैर्युताः ।
वानरा वानरैर्मुख्यैः क्रुद्धाश्च राक्षसाः ।
राक्षसास्त्राक्षसैरेव पिपिषुर्वानरा युधि ।
आच्छिद्य च शिलाः केचिन्निजघ्नू राक्षसा हरीन् ।
कश्चिदाक्षिप्य शस्त्राणि जघ्नू रक्षांसि वानराः । [45]
निजघ्नुः शैलमुसलैर्विविधैश्च परस्परम् ।
छिन्नवर्मायुधधरा राक्षसा वानरैर्हताः ।
रुधिरं सुस्रुवुस्तत्र कृत्ता शैलद्रुमा इव ।
रथेनाथ रथं चापि राक्षसं राक्षसेन हि ।
हयेनैव हयं चापि पिपिषुर्वानरा रणे । [50]
क्षुरप्रैरर्धचन्द्रैश्च निशितैश्च शितैः शरैः ।
त्रिशिखैः सुनिशितैः शक्तितोमरमुद्गरैः ।
राक्षसा वानरेन्द्राणां कदनं चक्रुराहवे ।
निस्त्रिंशभल्लैः परिघैर्मुसलैः कूटमुद्गरैः ।
भुशुण्डिभिश्च गदया तोमरैः प्रासपट्टिशैः । [55]
निजघ्नुर्वानरांस्तत्र राक्षसाः पर्वतोपमाः ।
प्रविष्टा राक्षसाः सैन्यं यत्र राघवलक्ष्मणौ ।
छादितांस्तत्र रामो निरदहच्च शरार्चिषा ।
लक्ष्मणस्तत्र रामश्च शरैरग्निशिखोपमैः ।
ममन्थू राक्षसानीकं दण्डहस्त इवान्तकः । [60]
शिरोभिरुज्ज्वलकिरीटकुण्डलैः
    सरम्भरश्मि परिदष्टदन्तकैः ।
महाभुजैः साभरणैः सहायुधैः
    सा प्रस्तृता भूः करभोरुभिर्बभौ ।
वानराश्चापरे घोरा राक्षसैरपरैः सह । [65]
द्वंद्वयुद्धमकुर्वंस्ते बहवो बहुभिस्तदा ।
तत्रासीत्सुमहद्युद्धं तुमुलं लोमहर्षणम् ।
रक्षसां वानराणां च वीराणां जयमिच्छताम् ।
वर्तमाने तु संग्रामे रौद्रे भीरुभयंकरे ।
हरिराक्षसयोर्युद्धं तुमुलं समपद्यत । [70]
वानरास्तत्र युयुधुः स तोरुद्रुमशिलायुधाः ।
अपरे मुष्टिभिः प्रहारानाद्रवन्ति महाबलाः ।
राक्षसाश्च महात्मानो नानाप्रहरणायुधाः ।
वानरास्त्वभिसंक्रुद्धा गिरिवृक्षकृतायुधाः ।
तेऽन्योन्यं समरे जघ्नुर्गर्जन्तो निशाचराः । [75]
युध्यतां तु तदा तेषां वानराणां महात्मनाम् ।
राक्षसानां बभूवाथ रणे कोपः सुदारुणः ।
राक्षसा भीमकर्माणो रावणस्य जयैषिणः ।
वानराणामपि चमू रामस्य जयमिच्छताम् ।
तेषां युद्धं महाघोरं संजज्ञे कपिरक्षसाम् । [80]
रामरावणयोरर्थे समभित्यक्तजीविनाम् ।
तद्बभूवाद्भुतं युद्धं तयोः संग्रामशालिनाम् ।
रुधिरार्द्रां महीं चक्रुस्तदा दारुणकर्दमाम् ।
कबन्धास्तत्र चोत्पेतुः पश्यन्तस्त्वशिरोक्षिभिः ।
उद्यतायुधदोर्दण्डैर्धावमाना इतस्ततः । [85]
शरीरच्छिन्नसंकीर्णा बभूव च वसुंधरा ।
शोणितौघमहावेगा घोरा नद्यः प्रविस्तृताः ।
निशाचरमहायोधकक्षवानरसंभवाः ।
प्रावर्तयन्नदीं घोरां भीरूणां भयवर्धिनीम् ।
असृग्धारामहापङ्कां नानाकीर्णास्थिशैवलाम् । [90]
छिन्नकायशिरोमीनां बह्वावयवशाद्वलाम् ।
गृध्रहंसगणाकीर्णां कङ्कसारसनादिताम् ।
झिल्लीरवसमायुक्तां काकवायससेविताम् ।
मेदोमज्जावसाकीर्णामावर्तस्तनितस्वनाम् ।
शरीरसंघातवहा बभूवुः फेनिलापगाः । [95]
मातङ्गरथकूलाश्च समरे त्वायुधद्रुमाः ।
कपिराक्षसदेहेभ्यः प्रसूताः करशाद्वलाः ।
वर्तमाने महारौद्रे संग्रामेऽतिभयंकरे ।
बभूवायोधनं घोरं गोमायुरवसंकुलम् ।
भल्लैः खड्गैर्गदाभिश्च शक्तितोमरसायकैः । [100]
ध्वजवर्मरथानश्वान्नागान्प्रहरणानि च ।
अपविद्धैश्च भग्नैश्च वीरैः सांग्रामिकैर्ध्वजैः ।
निकृत्तैः कुञ्जरैर्मत्तैस्तथा वानरराक्षसैः ।
चक्राक्षयुगदण्डैश्च भग्नैश्च धरणीस्थितैः ।
कृत्वा च तुमुलं युद्धं परिश्रान्ता रणाजिरे । [105]
निवृत्ता युध्यमानास्तु स्थितास्ते हरिराक्षसाः ।
एतस्मिन्नन्तरे चैव असंभ्रान्ताः शनैः शनैः ।
युद्धादपसृताः सर्वे रावणाद्या निशाचराः ।
विविशुर्नगरीं लङ्कां रक्षोगणनिषेविताम् ।
उपविश्यासने राजा सचिवानिदमब्रवीत् । [110]
सज्जीभवन्तु ते सर्वे राक्षसा भीमविक्रमाः ।
संग्रामादपक्रान्ते पुरीं रक्षःपतौ गते ।
विश्राम्यान्तर्गमाणाय निवासार्थं ससैनिकाः ।
आददुर्नगरं रम्यं रामसुग्रीवलक्ष्मणाः ।
दशरथनृपपुत्रवाहिनी तदानीं [115]
    क्षतजविशसनाविग्रहा रणान्ते ।
रिपुजननिधनपरिश्रमप्रहृष्टा
    रजनिमुखे न्यवसद्यथासुखं च रामः ।
इत्यार्षे रामायणे लङ्काकाण्डे युद्धपर्वणि तत्रनिवासो नाम सर्गः ॥
स तां रात्रिमुषित्वा तु रामाद्या हरियूथपाः ।
लङ्कां च ददृशुर्वीराः सह युद्धाभिकाङ्क्षिणः । [120]

निजघान गजो मत्तो हस्ते व्याघ्रं यथा वने ।
कुम्भकर्णात्मजं कुम्भं समरे युध्यवस्थितम् ।
ग्रसन्तमिव सैन्यानि दण्डहस्तमिवान्तकम् ।
प्रायोधयत संक्रुद्धो धूम्रो वृक्षशिलायुधः । [25]
तौ राक्षसहरी वीरौ स्वसैन्यपरिवारितौ ।
चक्राते प्रथमं युद्धं बलिशक्रौ यथा पुरा ।
देवान्तको गवाक्षं तु हृदि विव्याध मार्गणैः ।
पञ्चभिः सुमहावेगैराकर्णप्रेषितैः शितैः ।
स तथा ताडितस्तेन सक्रुद्धक्षतजेन्द्रिय । [30]
प्राहिणोत्सालमुत्पाट्य तं स चिच्छेद सप्तभिः ।
पुनश्च नवभिर्वीरं विव्याध कृतहस्तवत् ।
अथारुह्य गिरेः शृङ्गं गवाक्षो वानरोत्तमः ।
प्राहिणोत्तं समुद्दिश्य तस्य सैन्यं जघान तत् ।
एवं तौ बलिनां श्रेष्ठौ युयुधाते परस्परम् । [35]
कृतप्रतिकृते यत्तावन्योन्यवधकाङ्क्षिणौ ।
सारणेन समाहूत ऋषभो वानरोत्तमः ।
सारणं वृक्षमुत्पाट्य स जघान स्तनान्तरे ।
स तेनातिप्रहारेण व्याघूर्णित इवाभवत् ।
अपासर्पद्रणान्मध्याद्विषण्णश्चाभवत्क्षणात् । [40]
मेघाभं गजमारूढस्त्रिशिराः शरभं हरिम् ।
तोमरेण समाहत्य शिरसि प्राणुदद्भृशम् ।
स तु रोषपरीताङ्गः सप्तपर्णेन तं गजम् ।
जघानातिबलश्चण्डः शरभो वा गजं वने ।
नरान्तकोऽथ पनसं ताडयामास मार्गणैः । [45]
सोऽपि पादपवर्षेण तं विव्याध प्लवंगमः ।
अकम्पनेन कुमुदः परिघेण समाहतः ।
जानुभ्यामवनिं गत्वा निमेषात्पुनरुत्थितः ।
सक्रुद्धो रोषताम्राक्षो मुष्टिं तस्मिन्नपातयत् ।
मुष्टिप्रहाराभिहतो विचेता इव सोऽभवत् । [50]
अयोधयत चाश्वस्तः पुनरेव प्लवंगमम् ।
धूम्राक्षः शरवर्षेण हनुमत्पितरं हरिम् ।
ससैन्यं पूरयामास धाराभिरिव पर्वतम् ।
सोऽपि वृक्षैः शिलाभिश्च ससैन्यं तं समार्दयत् ।
महापार्श्वेन संसक्तो यूथपो गन्धमादनः । [55]
चक्रे स तुमुलं युद्धं शिलादन्तनखायुधः ।
वेगदर्शी शुकेनाजौ मर्मण्यभिहतः शरैः ।

$D_{11}$ ताल° (for साल°). —(l. 22) $V_3$ मयो मत्तो, $B_3$ गजो- न्मत्तो, $D_3$ गजो मत्त (for गजो मत्तो). $B_2$ $D_1$ महावने. —(l. 23) $D_4$ समरेषु (for समरे यु). $B_3$ युध्यवस्थितः. —(l. 24) V $B_3$ $D_1$ सर्व- (for first इव). —(l. 25) V $B_3$ प्रायोधयत संरब्धे ($B_3$ °ब्धो), $D_1$ प्रायोधयत (meta.) सुसंरब्धो (hypm.). $D_3$ प्रायोधयत् सुसंक्रुद्धो (for the prior half). $D_1$ धूम्रो (for धूम्रो). $D_3$ शिलायुधे. —(l. 26) $V_3$ -महावीरौ (for -हरी वीरौ). $D_{13}$ परिचारिणौ. —(l. 27) V $B_3$ $D_{1-4,13}$ तुमुल (for प्रथम). $V_3$ $D_{1-4,13}$ बलशक्रौ, $D_6$ वालिशक्रौ $V_1$ युधा (for पुरा). —(l. 28) Ś $D_3$ देवान्तो. —(l. 29) $B_3$ स महा- वेगैर् $\tilde{N}_2$ $D_{2,4,13}$ शरैः (for शितैः). $Ś_3$ आकर्णे प्रेषितैः शरैः, $V_1$ $B_3$ आकर्णादुत्थितैः शरैः ($V_3$ शितैः), $V_{2,3}$ आकर्णाक्षेपितैः शरैः, $D_1$ स्वकर्णविक्षिप्तैः शरैः, $D_4$ आकर्णप्रेक्षितैः शरैः (for the post. half). —(l. 30) $\tilde{N}_2$ V $B_2$ [अ]भिहतस् (for ताडितस्) $D_1$ स क्रुद्धः. —(l. 31) $\tilde{N}_1$ $V_{1,3}$ $B_3$ $D_{2,3}$ शालम् (for सालम्). $D_4$ शैलमुत्पाट्य (hypm.) (for सालमुत्पाट्य). $D_{4,13}$ च (for स) $B_3$ चिच्छेद स (by transp.). $V_3$ निजघान स्तनान्तरे (for the post. half). —(l. 32) $D_1$ हस्तवान् (for °वत्). —(l. 33) $D_1$ तथारुह्य, $D_3$ अथारुह्य, $D_4$ तथा सह, $D_{13}$ तथारुह्य (for अथारुह्य). —(l. 34) $Ś_3$ शृङ्गमुद्दिश्य, $D_3$ त समुत्क्षिप्य (for त समुद्दिश्य) $\tilde{N}_2$ $V_3$ $B_3$ च, $D_3$ न (for तत्). —(l. 35) $D_1$ बलिनौ (for बलिनां). —(l. 36) $D_3$ युक्ताव् (for यत्ताव्). $D_3$ अन्योन्य जयकाङ्क्षिणौ (for the post. half). —$D_1$ om. l. 37–38. —(l. 37) $V_3$ (after corr. as above) समाहूय (for समाहूत). $D_{13}$ सारणं तं समाहूय (for the prior half) $Ś_3$ $D_{13}$ वृषभो (for ऋषभो). —(l. 38) $\tilde{N}_2$ स जघान, $B_3$ $D_{3,4,13}$ निजघान (for स जघान). —(l. 39) $B_3$ स तेनापि, $D_3$ स तु तेन, $D_{13}$ एतेनापि (for स तेनाति). —$D_{13}$ om. l. 40–41. —(l. 40) $V_3$ अपसर्पद्, $V_1$ $B_3$ अपसर्पद्रणाच्छ्रान्तो, $V_3$ अपसर्पत स श्रान्तो, $D_{13}$ उपसर्प पदान्मध्यो (for the prior half). $\tilde{N}_2$ $D_3$ क्षण, $D_4$ क्षण (for क्षणात्). —(l. 41) $\tilde{N}_2$ सतत (for शरभ). —(l. 42) $D_3$ तोरणेन (for तोमरेण) $V_1$ महामाल्य, $D_{1,13}$ समाहूय (for समाहत्य). V प्राणदत् ($V_1$ °*)त, $B_3$ $D_{2-4}$ प्राणदद्भृश, $D_1$ प्राहरद्भृश, $D_{13}$ प्राहनद्भृश (for प्राणुदद्भृश). —(l. 43) $V_3$ $B_3$ तद्गज (for तं गजम्). —(l. 44) $\tilde{N}_2$ वानरं रणे, $V_3$ वानरो बले, $D_4$ वानरो गजं $B_3$ शरभस्तु गजं रणे (for the post. half). —(l. 45) V $B_3$ तु, $D_1$ स (for ऽथ). Ś $D_3$ नरान्तोऽथ (for नरान्तकोऽथ). —(l. 46) $B_3$ स हि (for सोऽपि). $V_1$ $B_3$ हृदि विद्ध ($B_3$ °ध्य), $V_3$ हृदि दृढ, $V_3$ हृदि विद्ध स राक्षस (for the post. half) —(l. 47) $D_3$ तोमरेण (for परिघेण) $V_1$ $D_1$ समाहित (for °हत). —(l. 48) $V_{1,3}$ $B_3$ $D_1$ अवनीं. —(l. 49) $B_3$ क्रोधताम्राक्षो. $V_1$ $D_{2,4}$ तस्मिन्न्यपातयत्, $V_{2,3}$ $B_3$ $D_{2,13}$ हस्त न्यपातयत्, $D_1$ त * न्यपातयत्. —(l. 50) $V_3$ शरभो (for इव सो) $B_3$ भास्वर (for सोऽभवत्). —(l. 51) $V_1$ चोत्प्लुत्य, $V_3$ $B_3$ $D_{1,3,4,13}$ चाश्व( $D_{3,13}$ °स्व)स्त, $D_2$ चाश्वस्त (for चाश्वस्त) $V_3$ अयोधयत्स्वकोपेन (for the prior half) $V_{1,3}$ $B_3$ प्लवगम (for °गमम्). —(l. 52) $V_{2,3}$ $B_3$ $D_{13}$ हनूमत् V $B_3$ रणे (for हरिम्). —(l. 53) $D_4$ स्वसैन्य (for ससैन्य). —(l. 54) $D_1$ स हि (for सोऽपि) $D_{4,13}$ वृक्ष (for वृक्षैः). $V_{1,3}$ $D_3$ तमभ्योदयत्, $V_1$ $D_{13}$ तमपोथयत्, $B_3$ समभ्योद्धत, $D_1$ तं सुमोदयत्, $D_3$ तमपोथयत्, $D_{13}$ त महार्दयत् (for तं समार्दयत्) $D_4$ स्वसैन्य तमपोथयत् (for the post. half). —(l. 55) $Ś_3$ महापार्श्वे तु (for महापार्श्वेन) $B_3$ $D_3$ संयुक्तो (for संसक्तो). —(l. 56) $\tilde{N}_2$ $V_{2,3}$ $B_3$ $D_{1-4,8,12,13}$ तुमुल (for स तुमुलं) $V_1$ चक्रे सुतुमुलं $B_3$ वृक्षवान शिलायुध (for the post. half). —(l. 58) $V_1$ * चूर्णयत्, $V_3$ [अ]थ चूर्णयत्, $V_3$ तु चूर्णयत्, $B_3$ [अ]भ्यचूर्णयत्, $D_{13}$ विचूर्णयत् (for

उत्तसे वेगमास्थाय रथं तस्य व्यचूर्णयत् ।
राक्षसस्तपनो घोरो नल समभिवर्तते ।
नलेन तु नलस्तस्य चक्षुषी विन्यपातयत् । [60]

## 22

[The episode of the performance of the sacrifice with Rākṣasa Mantras and the consequent attainment of invisibility by Indrajit along with his chariot is found thrice in different places in Ñ2 V3 B1 MSS. and twice in Ś V1.2 B1 D1-4.8.12.13 either as text or star passages. As it is very difficult to understand the exact position of the lines found in different contexts with the help of mere notes they are given as an independent passage No. 22 along with necessary references for the convenience of the reader.]

Before 6.34.30, Ś Ñ1 V D1-4.8.12.13 ins.; B1.2 ins. l. 1-29 (followed by 733*) before 6.34.30 and l. 30-43 after colophon of 6.34:

स यज्ञभूम्यां विधिवत्पावकं जुहुवेऽस्त्रवित् ।
जुह्वतस्तस्य तत्राग्निं रक्तोष्णीषाम्बरस्रजः ।
आजह्रुस्तत्र संभ्रान्ता राक्षसा यत्र रावणिः ।
शस्त्राणि शतपत्राणि समिधोऽथ विभीतकान् ।
लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा । [5]
सर्वतोऽग्निं समास्तीर्य शतपत्रैः सतोमरैः ।
छागस्यापि च कृष्णस्य कण्ठं जग्राह जीवतः ।
शोणितं तत्र विधिवत्स जुहाव रणोत्सुकः ।
सकृदेव सधूमस्य विधूमस्य महार्चिषः ।
बभूवुः सुनिमित्तानि विजयस्य प्रदक्षिणम् । [10]
प्रदक्षिणावर्तशिखस्तप्तहाटकसंनिभः ।
हविस्तत्प्रतिजग्राह पावकः स्वयमुत्थितः ।
ततोऽग्निमध्यादुत्तस्थौ काञ्चनः स्यन्दनोत्तमः ।
चतुर्भिः काञ्चनापीडैरश्वैर्युक्तः प्रभञ्जकैः ।
अन्तर्धानं गतः श्रीमान्दीप्तपावकसंनिभः । [15]
हुत्वाग्निं तर्पयित्वा च दैत्यदानवराक्षसान् ।
वाचयित्वा ततः स्वस्ति प्रयुक्ताशीर्द्विजातिभिः ।

व्यचूर्णयत्).—(l. 59) Ñ1 B1 पवन, Ñ2 तपनः; V2.3 ननर्द; B2 तपन (for राक्षस).—Ñ2 illeg. from तपनो in the prior half up to अभ्यधावन् (see var.) in the post. half. V1 D2 नर्द (V1 °द)-प्रतपनो. Ñ1 V1.2 B1.2 D2 घोरम् (for घोरो). D3 समभिवर्तत, D4 प्रत्यभ्यवर्तत. Ñ B2.3 अभ्यधावद्बल हरिः; D12 नील प्रत्यभिवर्तत (for the post. half).—After l. 59, D4 ins.:

1* स जघानाशु बाणेन प्रजह्व रणमूर्धनि ।
तपनं भीषण घोरमस्यधावद्बलो हरिः ।

—(l. 60) Ś1 (m. also) शरेण तु; V3 तपनेन; B1.2 D2.8.12 तलेन तु (for नलेन तु). D4 तस्य (for नलस्). V स न्यपातयत्; D1 समपातयत्; D3 व्यपातयत्; D4 व्यवपातयत्; D12 च व्यपातयत् (for विन्यपातयत्). Ñ B1.2 पातयामास चक्षुषी (for the post. half). D3 तलेन तु मुष्टस्तस्य चक्षुषि व्यपातयत्.—After l. 60, B1 ins.:

2* वीरः सुतबली रक्षो विधुन्वितेन संगतः ।

[Cf. 701* l. 13.]

## 22

(l. 1) Cf. 6.67.4[cd]. Ñ2 B1.2 स- (for स). Ś D8.12 -वेद्यां; Ñ2 V1 D12 -भूमौ (for -भूम्यां). G (ed.) निकुम्भिलायां (for स यज्ञभूम्यां). D1 तदा (for ऽस्त्रवित्).—For l. 2-3, cf. 6.60.1337* and 67.5.—(l. 2) Ś V3 D8 तत्र (for तत्र). D12 transp. तस्य and तत्र. G (ed.) [अ]ग्नौ (for [अ]ग्निं). Ś V1.2 D8.12 रक्तोष्णीषाम्बरस्रजः (for the post. half).—(l. 3) V3 तत्र आजह्रुः (by transp.), B1 तत्र आजह्रु; D1.2.4 आजग्मुस्तत्र (for आजह्रुस्तत्र). D12 विभ्रान्ता (for संभ्रान्ता).—V3 damaged from यत्र up to l. 4. D12 यत्र रावणि (for यत्र रावणिः).—For l. 4-7, cf. 6.60.22-23 and 67.6-7.—(l. 4) V1.3 B1 अस्त्राणि (for शस्त्राणि). B1.2 D12 शित- (for शत-). G (ed.) शितधाराणि (for शतपत्राणि). V1 D2 विभीत(D2 °त)कः (for विभीतकान्).—(l. 5) Ñ2 B1.2 D2.12 स्रुचं (for स्रुवं). Ś1 V1 कार्ष्णायसी. V1 D12 तदा; G (ed.) तम: (for तथा).—(l. 6) D2 समाप्लुत (for °स्तीर्य). B1.2 D1.4.12 शरपत्रैः (D1 °पत्रैः) (for शत°). B1 D4 स्तोत्रैः; D12 च तोमरैः (for सतोमरैः). G (ed.) शरैः सप्रासतोमरैः (for the post. half).—(l. 7) D1-4.11.12 transp. [अ]पि and च. G (ed.) छागलस्यापि. D2 कण्ठं, D12 सकृत् (for कण्ठं). G (ed.) आदाय (for जग्राह). Ñ1 V3 D1.2 जीवितं; V3 B2.3 D12 जीवित.—Ñ2 V3 om. l. 8-11.—(l. 8) cf. 6.60.1338*. V1 B1.2 D1.2.4.12 देन; D2 तस्य (for तत्र). D1 तत् (for स). D1 transp. स and जुहाव. D1.2.4 रणोत्सुकः (for °त्सुक).—For l. 9-12, cf. 6.60.24-25 and 67.8-9.—(l. 9) V1 B1.2 D1.4 समिद्धस्य, D2.3.12 सधूमस्य (for सधूमस्य).—(l. 10) Ś1 B1 D12 सन्; D2.3 स, D4 तु (for सु-). D4 प्रदक्षिणं. G (ed.) विजय प्राप्तयेऽभवन् (for the post. half).—(l. 11) D4 प्रदक्षिणाविधिप्रख्य (hypm.) (for the prior half). V1 B1.2 D1-4.12 तप्त- (for तप्त). V3 illeg.; B1.2 काञ्चन- (for हाटक-).—(l. 12) V1 तत् (hypm.) (for तत्). B1 प्रतिगृह्णाति (for °जग्राह).—(l. 13) D4 स्यन्दनो महान् (for स्यन्दनोत्तमः).—(l. 14) Ñ2 रथैः (for अश्वैः). V3 D2 प्रभञ्जकैः.—D1 om. from l. 15 up to दैत्य in l. 16.—(l. 15) Ñ2 V2.3 B1.2 D2.4.12 अन्तर्धानगत-. D2 संनिभ; G (ed.) मरक्त (for -संनिभः).—(l. 16) cf. 6.60.1341* l. 2 and 67.10[ab]. V3 B1.2 D1 हुताग्निं.—(l. 17) D12 शान्ति (for स्वस्ति).—After l. 17, D12 ins.:

1* हुत्वाग्निं राक्षसैर्मन्त्रैः संग्रामनिर्गतः ।

बभूव तनुमध्या सा पीनश्रोणिपयोधरा ।
मृगेक्षणा सुदशना नीलकुञ्चितमूर्धजा ।
द्योतयन्ती दिशः सर्वाः सर्वाभरणभूषिता । [265]
दिव्याम्बरधरा नारी दिव्यस्रग्वस्त्रधारिणी ।
वाति गन्धवहस्तस्याः वासयन्सर्वकाननम् ।
विमानं परमारुह्य हनूमन्तमुवाच ह ।
साधु साधु महाबाहो स्वागतं ते महाकपे ।
भवत्प्रसादान्मुक्तास्मि शापाद्धोरान्महामते । [270]
भद्रामिष्यातुमिच्छामि त्रिदिवं पवनात्मज ।
राक्षसस्त्वास्य विश्रम्भो न कर्तव्यस्त्वया कपे ।
प्रेषितो रावणेनासौ कालनेमीति राक्षसः ।
महाकपिवपुर्भूत्वा त्वां हन्तुं द्रुतमागतः ।
अत्राश्रमो न कस्यास्ति मायैवात्र प्रदृश्यते । [275]
एनं जहि महावीर राक्षसं रावणात्मकम् ।
अनेन प्रेषितस्त्वं हि मरणार्थं सरोवरे ।
इहेत्युत्तरतः पश्य क्षीरोदं देवदुर्लभम् ।
तस्मिन्द्रोणगिरिः श्रीमांस्तिष्ठत्योषधिपर्वतः ।
श्रुत्वा तस्या वचो रम्यं हनुमान्विस्मयं ययौ । [280]
तामुवाच महाबाहुः कासि त्वमिति भामिनि ।
कथं जातासि मकरी मत्स्यरूपा सती जले ।
हनुमतो वचः श्रुत्वा तमुवाचाथ खेचरी ।
शृणु वीर मदीयां त्वं कथामाश्चर्यकारिणीम् ।
मां विजानीह्यप्सरसं विद्युन्मालीति विश्रुताम् । [285]
नृत्येन तोषितो देवो मया वै शंकरः पुरा ।
विमानं तेन मे दत्तं सर्वदा कामगं शुभम् ।
तेनानेन विमानेन सर्वत्र विचराम्यहम् ।
इन्द्रलोके च नृत्यन्ती श्रान्ताश्चर्यमहं यतः ।
ततोऽस्मिन्पुण्यसलिले क्रीडार्थं समुपागता । [290]
शाण्डिल्येनाथ दृष्टाहं क्रीडन्ती मुनिना वने ।
मामुवाच ततो विप्रो मदनाकुलचेतनः ।
शर्म मे देहि सुश्रोणि हन्ति मां मदनो यतः ।
तव दृष्टिकृपाणेन मनो मे दारितं क्षणात् ।
अधरामृतपानेन जीवयस्व वराङ्गने । [295]
कामातुरो मयोक्तोऽथ ब्रह्मर्षिस्तपसि स्थितः ।
तपस्यसि किमर्थं त्वं मां कथं याचसेऽनघ ।
विप्रः प्रोवाच सिद्धं मे सम्प्राप्तं तपसः फलम् ।
त्वं यद्दृष्टासि रम्भोरु तरुणी मम सौख्यदा ।
ध्यात्वा क्षणं मयोक्तोऽथ मुनिस्तस्मिन्महावने । [300]
पुण्यवलाच्च सञ्जाता न भोग्या तव मानद ।
दिनत्रयं निरीक्षस्व सरस्यस्मिंस्तपोनिधे ।
स्नाताहमागमिष्यामि तव पार्श्वं सुखप्रदा ।
इदं मद्वचनं श्रुत्वा हितमित्येव सोऽब्रवीत् ।
युगत्रयसमं तस्य दिनत्रयमभूत्किल । [305]
तस्मिन्नेव दिने पश्चाद्रावणोऽसौ जगाम ह ।
जित्वा सर्वं जगत्सम्यक्पर्वतं गन्धमादनम् ।
तस्य सैन्येन महता चालितो गन्धमादनः ।
शैलो विशीर्णगलितो भग्नवृक्षमहीरुहः ।
सिद्धगन्धर्वविहगास्त्रस्ताश्च भुजगमाः । [310]
ततः प्रदोषे लङ्केशश्चचार गिरिमूर्धनि ।
तत्र वै गायमानाहं दोलारूढा रजस्वला ।

---

म्यान्तरेऽपि, Ds तलोनिरिक्षे (for तत्रान्तरेऽपि). D1 तदा (for क्षणात्). —(l. 263) T2.3 पीनश्रोणी-. —(l. 265) D1 स्नाता (for सर्वा°). —(l. 266) D1 अनुलेपना, D1 -वस्त्रधारिणी (for -वास-धारिणी). —(l. 268) D4.5 विमानवरम्. —(l. 270) D1 तव (for भवत्). D1 [अ]ह (for [अ]स्मि). —(l. 271) D1 पुरेऽपि (for भद्रामि). —(l. 272) D1 कार्योऽस्ति महा- (for कर्तव्यस्त्वया). —(l. 274) D1 मायामयकपिर्भूत्वा (for the prior half). D1 त्वाङ्गत्य बहून् (for त्वां हन्तुं द्रुतम्). —(l. 275) D1 [अ]ति (for [अ]स्ति). D1 यदि (for [अ]त्र प). —(l. 276) D1 वराङ्ग (for महा). D1 T1 रावणानु(T1 °त्म)जं. —(l. 277) D1 सरोवर (for सरोवरे). —(l. 278) D1 T1 रम्यो हि (for इहेति). D1 द्रुत इत्यतः ततः पश्य (for the prior half) and निर्मित (for -दुर्लभम्). —(l. 279) D1 [ओ]षधि- (for [ओ]षधि). —(l. 280) D1 शुभ (for रम्य) and विस्मितो जगौ (for विस्मयं ययौ). —(l. 281) D1 महाबुद्धि (for °बाहु) and त्व कथयामि (for [अ]सि त्वमिति). D4.5 भावेनि (for भामिनि). —After l. 281, D1 ins.:

10* योऽप्यस्य मत्स्यरूपेण मगाय नव दर्शनात् ।

—(l. 282) D4.5 दिव्य (for मत्स्य). —(l. 283) D4.5 हनूमद्वचनं श्रुत्वा (for the prior half). —D1 om. l. 285. —(l. 285) D1 अहं स्वर्गाङ्गना नित्य मालिन्यप्सरसां वरा. —(l. 287) D4.5 सर्वकामदं(D1 °गं) शुभ (for the post. half). —(l. 289) T1 श्रान्ता (for श्रान्ता). D1 वने (for यतः). D1 मानसमप्सरसामयात् (for the post. half). —(l. 291) D1 क्रीडन्ती दृष्टा (by transp.). D1 मुनिकानने (for मुनिना वने). —(l. 292) D1 तदा मदे (for ततो विप्रो). D4.5 कामेन (for -चेतनः). —(l. 294) D1 -प्रपातेन (for -कृपाणेन) and प्रभु (for क्षणात्). —(l. 296) D1 [अ]भ्युक्तो (for [उ]क्तोऽथ). T1 स्व कामातुरोऽपीश (for the prior half). —(l. 297) त्वं मां (by transp.). —(l. 298) D1 प्राह न सिद्धि (for प्रोवाच सिद्धं). D1 मीतस्व विप्र प्राहैतत् (for the prior half). —(l. 299) D1 यदीच्छसि (for यद्दृष्टासि). T2.3 तरुणा. D1 भोक्ष्ये मे वचनं वद (for the post. half). —(l. 300) D1 [S]सौ (for ऽथ). —(l. 301) T1 [अ]थ (for [अ]प). D1 नव भाग्य, T2.3 न(T3 सा) भार्या तव (for न भोग्या तव). —(l. 302) D4.5 प्रती(D1 प्री)क्षस्व (for निरीक्षस्व). D1 तपोधन, D1 महामुने (for तपोनिधे). —(l. 303) D4 न संशय, D1 सुखप्रद (for सुखप्रदा). —(l. 304) D1 वाक्य (for हितम्). —(l. 306) D4.5 [S]प्यसौ(D1 यथा)गमत् (for ऽसौ जगाम). —(l. 307) D1 -सैन्य (for सम्यक्). —(l. 308) D1 चलितो (for चालितो). —(l. 309) T1 विशीर्ण- (for विशीर्ण). D4.5 शिला विशीर्णा गलिता भग्नवृक्ष महीरुहाः. —(l. 310) D4.5 मानवाः(D1 °नगाः) (for -विहगाः). D1 चाहिताश्च भुजगाः (for the post. half). —(l. 311) D1 प्रदोषे. —(l. 312) D1 गायामि दोलाभ्यां

क्षीराब्धिमध्ये स ददर्श भूधरं
विराजमानं नभसीव भास्करम् ।
स च प्रहृष्टः पवनात्मजस्तदा [410]
विलोक्य तं सानुषु धातुभिर्युतम् ।
आरुह्य तस्याद्भुतशृङ्गमेव
चचार चामीकरचारुभूषु ।
दृष्ट्वौषधीदीप्तिविदीपितो भृशं
वितर्कयत्काननचारणः कपिः । [415]
अग्निर्भूतस्तापकरस्तु देहिनां
माह्लादयत्येव हि मे मनः कथम् ।
इमाश्च दिव्यौषधिवल्लरीर्यथा
लतान्वया हेममया भवन्ति ।
हिरण्यवर्णा रसमारेणवो [420]
विभान्ति नक्षत्रगणानुकारिणः ।
यथा च सत्ये विनिवृत्तिसंस्थिता
विशुद्धभावा खलु नाकगामिनः ।
ज्वलन्ति भागेषु चलन्ति रश्मयः
स्फुरन्ति सौगन्ध्यगुणं किरन्ति च । [425]
समागतं मां खलु वीक्ष्य चाधिकं
सिद्धिं गता देवमहौषधीगणाः ।
ततो महात्मा पवनात्मजस्तदा
निशामयामास महौषधीश्च ताः ।
विचिन्वतस्तस्य ततश्च ताः शुभा [430]
अदृश्यतां जग्मुरनन्तवाक्यः ।
विस्मिते वासवदूतनन्दनो
वनं विलोक्याथ जगाम चोत्सुकम् ।
ततः समार्थयामास हनूमान्देवतागणान् ।
मम सिद्धिं प्रयच्छन्तु महौषध्यादयो वराः । [435]
भो शैलराज मद्वाक्यं शृणु देव सुखप्रद ।
रामकार्यस्य सिद्ध्यर्थं प्रयच्छ मम चौषधीः ।
मृतसंजीवनिं श्रेष्ठां सौवर्ण्यकरणीं शृणु ।
विशल्यकरणीं ख्याते मातर्मे देहि दर्शनम् ।
विलीनाः पर्वतोद्देशे तेन मत्वाय चात्मनः । [440]
ततः क्रोधादिदं वाक्यं भूधरं प्राह मारुतिः ।
न दया न च दाक्षिण्यं तव पाषाणरूपिणः ।
नन्वग्रेसरसा खनित्वाद्य पातयिष्यामि सागरे ।
इत्युक्त्वा वेष्टयामास पुच्छेन धरणीधरम् ।
वेष्ट्य चोत्पाटयामास तमद्रिं लीलया कपिः । [445]
पुच्छेनावेष्ट्य दोर्भ्यां च गृहीत्वौषधिपर्वतम् ।
ननाद हनुमांस्तत्र समुद्र इव पर्वणि ।
तेन शब्देन महता गन्धर्वाः शस्त्रपाणयः ।
अनुजग्मुः सुसंरब्धा योद्धुकामास्तु मारुतिम् ।
कस्त्वं वानररूपेण सम्प्राप्तो निशि दारुणे । [450]
गन्धर्वाणां वचः श्रुत्वा हनूमान्वाक्यमब्रवीत् ।
श्रुता वा यदि किष्किन्धा जम्बूद्वीपसमाश्रया ।
वानराधिपतिस्तत्र सुग्रीवो नाम विश्रुतः ।
मित्रकार्यार्थमुद्युक्तो रावणेनाथ निग्रहे ।
मित्रभ्राता राक्षसेन शक्त्या च विनिपातितः । [455]
तदर्थं सम्प्रयातोऽहमोषधिं प्रति पर्वतम् ।
विशल्यकरणीं नाम जानेऽहं प्रथमौषधीम् ।
विघ्नो मेऽत्र न कर्तव्यः प्रसादं कर्तुमर्हथ ।
अहं वानरराजस्य भृत्यस्तस्य गुणैर्वृतः ।
हनूमानिति विख्यातस्तदर्थं प्रार्थयामि वः । [460]
हनूमतो वचः श्रुत्वा गन्धर्वास्ते महाबलाः ।
विचित्रकवचाः सर्वे नानाप्रहरणोद्यताः ।
कोलाहलं प्रकुर्वन्तः सायकैः समभिद्रवन् ।
ततो नानायुधैः सर्वे ते जघ्नुर्मारुतात्मजम् ।
हन्यमानः सुबहुभिरुत्पपातोर्ध्वमञ्जसा । [465]

—(l 410) D4 हेमे प्रहृष्टं (for स च प्रहृष्टः) —(l 411) D4 तत् (for तं) —(l 412) D4 एव, D5 एक (for एव) —(l 413) D4,5 चारुभूमिं (D5 °षु) —(l 414) D4,5 दीप्तिभिस्तां D4 विदिग्दीप्तिनो, D5 विस्मितविद्विनो भृशं. —(l 415) D4 आकुलचेतसा, D5 आत्त स चारुणः (corrupt) (for काननचारणः) —(l 418) D4 मनस्विनः (for वल्लर्यथा) —(l 419) D4 विभाति (for भवन्ति) D4 एता यथा शैलकुले विभाति च —D5 om l 420–423 —(l 420) D4 सत्प्रकाशेन वा (for रसमारेणवो) —(l 421) T1 विभाति (for विभान्ति) and [अ]नुसारिणः (for °कारिणः) D4 विभाति नक्षत्रगणेन चन्द्रमाः —(l 422) D4 ते (for सत्ये) —(l 423) D4 विशुद्धभावाः —(l 424) D5 चरति (for चलन्ति) —(l 425) D4,5 सौगन्धिगुणं D5 om च —(l 428) T2 तथा (for तदा) —(l 429) D4 विचेष्टया मास (for निशामयामास) —(l 430) D4 तथैव (for ततश्च) D5 च ता शुभा रता (for ततश्च ता शुभाः) —(l 431) D4,5 जवो हि सिद्धये (for अनन्तवाक्यः) —(l 432) D5 om दूत —(l 433) D4 ननाद (for जगाम) D4,5 सो (D5 चो) त्सुकः —(l 434) D4 गुणं (for गणान्) —(l 435) D4,5 दिव्यौषध्यो दया (D5 °ध्यो यथा) परः (for the post half) —(l 436) D4,5 महत्पद (D5 °दा) —(l 437) D5 T2 राज (T3 °म) कार्ये (for रामकार्यस्य) D4 चौषधि T2 प्रयच्छतु नौषधी (for the post half) —(l 438) T2 संजीवनी T2,3 सावर्ण (T2 °र्ण्य) करणी शुभे (for the post half) —(l 439) T2,3 करे (for करणि) —For l 438–439 D4 subst

12* मृतसंजीवनी चाद्य सौवर्ण्यकरणीं तथा ।
विशल्यकरणीं चैव सन्धिनीं देहि मे गिरे ।

—Thereafter D4 cont

13* करणं व्रणसंस्य न्दुष्टाङ्गस्य दर्शनम् ।

—(l 440) D4 पर्वतोद्देशाय (for °शे) and सखाय (for मत्वाय) —(l 443) D4,5 नदीश (for नन्वग्रेसर) —(l 445) D4 शून्ययाजन, D5 पर्वतस्य तत् (for लीलया कपिः) —(l 449) D4 समाजग्मु (for अनु°) —D4,5 om l 450–463 —(l 457) T2 प्रथमौषधिं —(l 464) D4 [आ]युधैर्जघ्नु, D5 विधैः घ्नन्तेश (for [आ]युधैः सर्वे) D4 गन्धर्वास्तत्र मारुतिं (for the post half) —(l 465) D4 स (for सु).

तस्मिन्नेव क्षणे धीमान्संप्राप्त पवनात्मज ।
स दीप्यमानया भासा नन्दिग्राम महाबल ।
दृष्ट्वान्भरत तत्र जटावल्कलधारिणम् । [510]
तपस्विन घनश्याम विशालाक्ष धनुर्धरम् ।
रामोऽयमिति मत्वासौ लक्ष्मणेन विना कथम् ।
भरायमागतो रात्रौ विहाय हरियूथपान् ।
अनेन सा परित्यक्ता सीता प्राणप्रिया सती ।
रावणस्य गृहे रात्रो सरक्षा घोररक्षस । [515]
पुन पृच्छामि कि यामि संदेहो मम साम्प्रतम् ।
तस्यैव रूपसदृश एष कोऽपि भविष्यति ।
न राम इति चाशङ्क्य लङ्कामभिमुखो ययौ ।
हनूमाञ्शोकविकल सभ्रान्त इव सत्वरम् ।
भरतोऽपि च त दृष्ट्वा गगने सूर्यसनिभम् । [520]
दुष्प्रदा भ्रमन्नीति जग्राह सशर धनु ।
हन्तुमिच्छति काकुत्स्थो प्रयान्त दक्षिणामुखम् ।
तस्मिन्नेव क्षणेनाथ शुश्राव दिवि भाषितम् ।
मात्रिचार कुरुष्वैव तव बन्धुर्भविष्यति ।
निवृत्तशस्त्र शुद्धात्मा वाच श्रुत्वा च खेरिताम् । [525]
ध्यात्वा शान ददौ वीरो विप्रेभ्यो हि तदैव तम् ।
अतिचण्डेन वेगेन जगाम पवनात्मज ।
दक्षिणाशामार्गेण सप्राप्तो लवणार्णवम् ।
सेतुना प्लवगेन्द्रेन क्रान्तमान यथा नभ ।
रावणेन ततो रात्रौ माल्यवान्प्रेषितो द्रुतम् । [530]
बलेन महता युक्तो योद्धु हनुमता सह ।
आकाशगामिभिर्वीरै राक्षसै परिवारित ।
बलकोट्ययुतस्तत्र गगन सागरोपरि ।

तमेव शरजालेश्च सर्व बद्ध समुद्दरै ।
सर्वायुधै कृपाणैश्च पट्टस स्यन्दिन । [535]
परिघैर्वज्रधारैश्च छादयन्ति प्लवगमम् ।
आत्मान राक्षसै रुद्ध दृष्ट्वा स हनुमानिति ।
ननाद घनवद्घोर युद्धे च निर्दये मन ।
हस्ताभ्या धारयञ्शाल पादाभ्या निजघान तान् ।
वृक्षास्त्वादाय पुच्छेन कल्यामास्फालयद्द्रुतम् । [540]
ततो हलहलाशब्द सजज्ञे रक्षसा तदा ।
तेन शब्देन सत्रस्ता समुद्रतलवासिन ।
निहतास्ते महाघोरा राक्षसा कामरूपिण ।
द्रुत हनुमता तत्र पङ्करामेव महार्णवे ।
ततोऽतिक्रुद्धो दशकन्धरात्मजो [545]
जघान बाण पवनात्मज हृदि ।
गिते शरैर्माल्यवतोऽभिकाङ्क्षित
स्तत्रातिकोपाश्च जहार कार्मुकम् ।
दीर्घेण लाङ्गूलबलेन रक्षो
बबन्ध पाशे गगने प्लवगम । [550]
उद्वह्यमान सहमाम्बरस्थितो
बिभेद स नूलवरेण राक्षस ।
शूर निमग्न हृदि मारुतिस्तदा
ममर्द वै सागरमध्यसंस्थित ।
न तत्र वृक्षा न वन न भूधरा [555]
कथ हि युद्ध स चकार मारुति ।
दोर्भ्या हतो द्यौर्विधिपर्वतस्तदा
पद्मा तदाकृष्यत कन्धरान्तरि ।

(for स) Ds दीप्यमान स्वया भासा (for the prior half) and महाबल (for °बल) —(l 512) Ds विनाय (for मत्वासौ) —(l 513) Ds [आ]यात स्वय (for [म]य मागतो) —(l 514) Ds तथ (for परि) Ds मम प्रिया (for प्रिया सती) —(l 515) Ds राक्षसी (for रात्रौ) Ds घोरराक्षस, Ds राक्षसीभि Ts घोररक्षस —(l 518) Ds अभिमुख —(l 519) Ds सत्वर —(l 520) Ds वह्नि (for सूर्य) —(l 521) Ds [द]व (for [इ]ति) Ds दुष्प्रदोदयश्चास्य स जग्राह धनु शरान् —After l 522, Ds cont a passage relegated to App I (No 57) —Ds om l 523–526 —(l 523) Ds क्षणे मोध —(l 525) Ds निवृत्त शुद्ध (for निवृत्तशस्त्र) and तु खेचरी (for च खेरिताम्) —(l 526) Ds तु (for तम्) —(l 527) Ds प्रचण्ड (for चण्डेन) and हनूमा मारुतात्मज (for the post half) —(l 528) Ds क्षणाद् (for दक्षिण) Ts जगाम (for सप्राप्तो) —(l 529) Ds राजमान व्योम (for the post half) —(l 533) Ds परिक्षोभ्य गत स्वस्थो गगने सगतो यथा —(l 534) Ds ते चैव शरजालेन (for the prior half) —For l 532–534, Ds subst

16* दृश उत्कुल व्यूह निमेनदिति निन्तयत ।
निरुद्ध स तत्र शुभमनप्राक्षसे मह ।
कुसुम शुभग्रीवा वानरेन्द्रश्च महाबलम् ।
गदाभिर्भिन्दिपालैश्च शक्तिभिश्च परश्वधै ।
च लैर्नाल्पशैश्च मम जातश्च सुदरे । [5]

—(l 535) Ds त (for च) Ds पट्टिशै —(l 536) Ds परैर् (for परि°र्) —(l 537) Ts विद्ध (for रुद्ध) Ds निरा, Ts अपि (for मन) —(l 538) Ds समुद्रे निर्दये मन (for the post half) —(l 539) Ds धारयन् (for धारयम्) Ts द (for तान्) —(l 540) Ds भूम (for द्रुतम्) —(l 542) Ds जातिन (for वासिन) —(l 543) Ds हता वीरा (for निहतास्ते) —(l 544) Ds तेन (for तत्र) —(l 545) Ds तु (for ति) Ds दशकन्धरात्मजा, Ts दशकठ-श्चर्यको —(l 547) Ds Ts मारुतनासिका (Ts °ची)भिस् शर्वको —(l 548) Ds वक्रो (for तदा), Ds सतै शरैर्माल्यवताभिपातनैर् —(l 549) Ds स दीर्घेण लाङ्गूलबलेन रक्षो —(l 551) Ds उद्वल्य पुच्छ, Ds Ts विन (Ts उत्)स्थान Ds [अ]म्बरे —(l 553) Ds मारुतस् (for मारुति) —(l 554) Ds ममर्द (for ममर्द). —(l 555) Ts वृक्षो (for वृक्षा) Ds च भूधराश्च (for वन न भूधरा) —(l 556) Ds न (for हि) —(l 557) Ds दोर्भ्या स, Ts दोर्भ्यां (for दोर्भ्यां) —(l 558) Ds पद्मायस्य न (for तदाकृष्यत) and अपि (for हरि) Ds मा-धवन नवान (for [अ]ह्यत कन्धरा हरि) —(l 559) Ds सद्वान्तरे

एतस्मिन्नन्तरे वायुः प्रववौ सुखशीतलः ।
क्षीणाकारास्तदा तारा प्रत्यूषः समपद्यत । [610]
दृष्ट्वा प्रभातं संप्राप्तं रामः प्रबुद्धचेतनः ।
हा लक्ष्मण प्रियभ्रातः क्व यास्यसि विहाय माम् ।
हा हतोऽस्मि क्व गच्छामि किं पृच्छामि महाप्रिय ।
किं मे राज्येन भोगैर्वा किं प्राणैः सीतयापि वा ।
यत्प्राप्तस्त्वं महाबाहो दीर्घमध्वानमुद्यत । [615]
कौसल्यां किं नु वक्ष्यामि सुमित्रां च परंतप ।
भरतं किं नु शत्रुघ्नं त्वया जीवितवान्विना ।
हा भ्रातस्तु महाबाहो प्रतिवाक्यं प्रयच्छ मे ।
न त्वं जीवसि सौमित्रे त्यक्त्वा तु स्वर्दितं च माम् ।
त्वद्वियोगेन तु खेन तदा चेदमुदीरितम् । [620]
करोम्यराक्षसां भूमिं त्रैलोक्यं च दहाम्यहम् ।
एवमुक्त्वा महाबाहुः प्रगृह्योदग्रकार्मुकम् ।
अथान्धकारिमिंगवह्निस्तनकीव व्यशोभत ।
तत समस्तमनसो वानरा भीमविक्रमाः ।
स्मितवदिति भाषन्तः ससुग्रीवविभीषणाः । [625]
प्रणिपत्याग्रतः स्थित्वा सर्वे प्राञ्जलयोऽब्रुवन् ।
प्रसत्याऽयं महाबाहो त्रैलोक्यं मा विनाशय ।
त्वामेव क्रुद्धमालोक्य रौद्राक्षोद्धृतपाणिनम् ।
दृष्ट्वा देवाः सगन्धर्वाः प्रद्रवन्ति दिशो दश ।
निर्यातैर्गगनं विद्युत्कैर्दीप्तमिवाम्बरम् । [630]
चलन्ति पर्वता भूमौ वातोद्धूता महार्णवाः ।
उल्का पतन्ति निर्घोषाः प्रनष्टाश्च दिशो दश ।
विमैवदिति भाषन्तो दिवि देवाः सचारणैः ।
इति विज्ञापितस्याथ सुग्रीवेण प्लवंगमः ।
प्रशान्तिमगमत्कोपो राघवस्य महात्मनः । [635]
भूयः शोकसमाविष्टो रामो दशरथात्मजः ।
लक्ष्मणं पतितं दृष्ट्वा निशां क्षयमुपेयुषीम् ।
अब्रवीद्राघवो दीनं सुग्रीवं वानरेश्वरम् ।
सुग्रीव गच्छ किष्किन्धां सह वानरसेनया ।
कृतं मित्रप्रदानं त युद्धं मे भुवि दुर्लभम् । [640]
अहं चाद्य महाबाहो यत्करिष्यामि तच्छृणु ।
आत्मानं प्रदहिष्यामि प्रदीप्ते हव्यवाहने ।
सहानेन गमिष्यामि लक्ष्मणेन महाबल ।
प्रेतराजपुरं दिव्यं नोत्सहे कर्तुमन्यथा ।
विभीषणस्य कर्तव्यं न कृतं भाषितं मया । [645]
एतद्दहति मे देहं शुष्ककाष्ठमिवानलः ।
एवमुक्तस्तु रामेण सुग्रीवो वाक्यमब्रवीत् ।
किमर्थं मुह्यसे वीर त्वादृशो नैव मुह्यति ।
त्रियामा शर्वरी जाता पश्चिमोऽयं प्रवर्तते ।
नियतं पश्चिमे यामे हनुमानागमिष्यति । [650]
इति तस्य ब्रुवाणस्य हनुमान्ददृशेऽम्बरे ।
प्रदीप्त इव शैलेन्द्रो गगने प्राप दीपितः ।
किमेतदिति भाषन्तः कपयो जातविस्मयाः ।
केचिद्द्रुमान्समारूढाः केचिद्भीताः प्रदुद्रुवुः ।
रन्ध्रान्गुहाः प्रविविशुः सेतुमन्ये प्रपेदिरे । [655]
कश्चित्सघातूनास्तस्थुः कश्चिद्धावन्ति गर्विताः ।
कश्चिच्छैलशिलावृक्षान्कश्चित्कायांश्च रक्षसाम् ।
प्रगृह्याभ्यद्रवन्क्रुद्धा नादं मुञ्चन्ति सागरे ।

words or both) D4 om , D9 81 T2 107 T3 111 —(l 610) D4 तथा (for तदा) D9 क्षीणतारस्तदाकाश (for the prior half) —After l 610 D4 ins

18* नस्त प्रयातो सगवानस्याभ प्रक्षीणमण्डल ।

—(l 611) D9 प्राप्त तु (for संप्राप्त) —(l 612) D4,9 प्रयासि (for यास्यसि) —(l 613) D4,9 क (for किं) D4 महासुत्र D9 मम प्रिय T2 °प्रय (for महाप्रिय) —(l 614) D4 क्लेशेन (for भोगैर्वा) —(l 615) D4 त्वं प्रयातु (for यत्प्राप्तस्त्वं) —(l 616) T2 प्रवक्ष्यामि D4 वा (for च) D9 एतत् तत (for च परंतप) —(l 617) D4 चापि (for किं नु) D4 reads विना in marg —(l 618) D4 वीर तु (for भ्रातस्तु) —(l 619) D4 अहं से (for जीवसि) D9 न त्वं साधयसि भ्रातः (for the prior half) D4 त्यक्तु (for त्यक्त्वा) and हि (for च) —D4 om l 620 621 —(l 620) D9 पृथियोगेन (for त्वद्वियोगेन) and तथा (for तदा) —(l 622) D9 इत्युक्त्वा स (for एवमुक्त्वा) D4,9 प्रगृह्योदग्रकार्मुकः (for the post half) —(l 623) D4 प्रथमकारे D9 अथान्धकारे T2 व्यरोचत (for व्यशोभत) —(l 624) D9 त्रासा (for विक्रमाः) —(l 625) D4 ऊचिरे विभीषण (for the post half) —(l 626) D4 T2 [आ]गता (for [अ]ग्रत) D9 [ऽ]ब्रवन् (for [ऽ]ब्रुवन्) —(l 628) D4,9 एव (for एव) D4 T3 [उ]द्यत (for -[उ]द्धृत) —(l 630) D4,9 स्फुर( D4 °ट )ते गगने विद्युत् (for the prior half) D4 ज्वाला, D9 ज्वालेद् (for चालैद्) —(l 631) D4 चञ्चुवाताता विनन्ति (for पवना भूमौ वातोद्धूता) D9 यथाणवा —(l 632) D4 चलन्ति शिखरा नाना शैलेन्द्रा दिशो दश (corrupt) —(l 633) D4 इत्य च (for एतद्) D4 भाषते (for भाषन्ता) D4,9 मन्दरेणा —(l 634) D4 एव (for इति) and [अ]थ सुग्रीवस्य (for [अ]थ सुग्रीवेण) —(l 638) D4 वानरै सह (for वानरेश्वरम्) —(l 639) D9 याहि (for गच्छ) D4,9 मम (for सह) —(l 640) D4 यद् यैव तु दुष्कृत (for the post half) —D9 om from प्रदहिष्यामि in l 642 up to प्रेतराजपुर in l 644 —(l 643) D4 म मल —(l 644) D9 दीप्त (for दिव्य) and स्व यथा कृत (for कर्तुम् यथा) —(l 645) D4 मित्रस्य (for कर्तव्य) —(l 646) D4 एव (for एतद्) and वीर (for देह) D4,9 पुष्क (for शुष्क) —(l 648) D4,9 दव (for वीर) D9 हि (for [ए]व) —(l 649) D4,9 याना (for जाता) —(l 650) T2 निवते (for नियत) —(l 651) D4 दृश्यते (for ददृशे) —(l 652) D4 प्रतिदीपित D9 प्रावनवा (for प्राप दीपित) —(l 655) D4,9 गुहा (for गुहा) D4 प्रतस्थिरा (for प्रपेदिरे) —(l 656) D9 अम्बरे (for सघातूना) D4 कश्चित्पलायन्ते (for the prior half) —(l 657) D4 केचित्तु दन्ति राक्षसा (for the prior half) —(l 658) D9 प्रगृह्य यथा दृष्ट (for the post half) —

गृहीत्वा शालिस्कन्धांश्चिक्षिपुस्ते महातरुम् ।
स्थूलदंष्ट्रो महानादो महादंष्ट्रश्च राक्षसः ।
उल्कामुखो महावक्त्रश्चतुर्ग्रीवो महाबलः । [35]
इन्द्रकेतुर्द्विजिह्वश्च महावक्त्रो महाबलः ।
रक्ताक्षः पिङ्गलाक्षश्च लम्बोदरमहोदरौ ।
वज्रनासो विनासश्च वाक्तुण्डस्तु भैरवः ।
गृध्रतुण्डश्च हस्तश्च काकः कुञ्जरकावुभौ ।
उल्कास्यो महाकायो हस्तिपादश्च राक्षसः । [40]
एते चान्ये च बहवो रावणस्य हितैषिणः ।
आप्लुत्य गगनं तस्थुर्हनूमद्वधकाङ्क्षया ।
मायाविनो महावीर्या मायी दुर्जना राक्षसाः ।
शक्रो वैश्रवणः कश्चिदसौ वरुण एव च ।
ब्रह्मा विष्णुः स्वयं रुद्र आदित्यो वायुरीश्वरः । [45]
ऋषयः पितरो देवाः कश्चिदेव हुताशनः ।
चलन्तो राक्षसाः सर्वे देवा भूत्वा महाबलाः ।
आप्लुत्य गगनं तस्थुर्हनुमान्यत्र गच्छति ।
हनुमानपि तेजस्वी गृहीत्वा शिखरं गिरेः ।
आजगाम महातेजा लीलया स हरीश्वरः । [50]
स तैर्हुतभिराकुलः शक्तिशूलधरैस्तथा ।
निरुद्धः स महाकायः पतङ्गैरिव पर्वतः ।
विश्रान्तास्तत सर्वे हनूमता महौजसा ।
अब्रवीद्राक्षसान्सर्वान्वचनं पवनात्मजः ।
यदि रुद्रगणाः सर्वे युद्धार्थमिह चागताः । [55]
तथापि तान्हनिष्येऽहं राक्षसार्थे समुद्यतान् ।
यदि ब्रह्मादयो लोकाः सदेवासुरपन्नगाः ।
अहं सर्वान्हनिष्यामि का शङ्का मम राक्षसैः ।
तच्छ्रुत्वा वचनं ते तु हनूमन्तं समन्ततः ।
प्रयत्नाद्वारयन्त्येव राक्षसाः पवनात्मजम् । [60]
स हन्यमानो बहुभिश्चक्रमे महाबलः ।
पादाभ्यां पर्वतं गृह्य पक्षाभ्यामिव स युध्यति ।
करलाङ्गूलपातेन पद्भ्यां प्रहरते कपिः ।
कस्यचिद्दारयद्वक्त्रं कांश्चित्कर्णाद्गृहीत ।
कांश्चित्पदाद्ग्रहणं जानुभ्यां निष्पिपेष च । [65]
अन्यान्बाहुबलासि कांश्चित्तत्रैव पोथयत् ।
एवं ते राक्षसाः सर्वे सविमानाश्च चारणाः ।
सागु माक्षिति तं तीरं पुच्छवेगेन चाकिरत् ।
तन्निशम्येदं सुमहत्स्थूलजङ्घो महाबलः ।
एक एव प्रदुद्राव निःश्वसन्नुरगो यथा । [70]
स गत्वा रावणं सर्वं सर्वं वृत्तं न्यवेदयत् ।
हताः सर्वे महावीरा ये त्वया निशाचराः ।
एकेन कपिमुख्येन शाखया रणमूर्धनि ।
अहमेको महाराज तदा तस्य महाप्रभो ।
कथंचिदेव संप्राप्तस्त्वां राजन्विदितुम् । [75]
तस्य तद्वचनं श्रुत्वा राक्षसस्य महात्मनः ।
दीर्घमुष्णं च निःश्वस्य न किंचिदिदमब्रवीत् ।
दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ।
यत्र वानरमात्रेण राक्षसा बहवो हताः ।
हनूमांश्च महातेजा निहत्य रजनीचरान् । [80]
आजगामाचलं शृङ्गं नगेन्द्रं च महद्बलम् ।
तस्य नादं तदा श्रुत्वा सर्वे ते हरियूथपाः ।
हनुमानिह संप्राप्त इति हर्षमुपागताः ।
राघवोऽपि रवं श्रुत्वा हनूमतो महात्मनः ।
बाष्पपर्याकुले नेत्रे प्रमृज्य मुदितोऽभवत् । [85]
सविद्युदिव जीमूतस्तोयपूर्णो नभस्तले ।

°थम ) —Note hiatus between the two halves of l. 30 —(l. 31) D1 तस्य मार्गं विनिश्चित्य निश सं वै निशाचरा —(l. 33) D1 उपेतुस्ते महोन्नाद (for the post. half) —(l. 34) D1 महान्ता (for °नाग) —(l. 35) D1 चतुर्ग्रीवो (for °मेत्रो) —Ś1 om. l. 3-40 —(l. 37) D1 लम्बोदर (for लम्बो र) —(l. 38) Ś1 D1 2 तु (for तु) —(l. 39) D1 4 (for हस्तश्च) L (ed.) वाक- D1 हस्तश्चकुञ्जरकावुभौ (for the post. half) —D1 om. l. 41-43 —After l. 43 D1 wrongly repeats l. 41 and om. from l. 44 up to the prior half of l. 45 —(l. 44) D1 कश्चित् (for रश्चिद्) —(l. 45) D1 2 रुद्राक्षादि (for रुद्र आ°) D1 वसुचन्द्रमा (for °रीश्वरः) —(l. 46) D1 2 कश्चित्तो (for कश्चिद्देव) Ś1 हुताशना (for °नः) —(l. 47) D1 एव ते (for यत्र ते) and देवभूता (for °देवा भूत्वा) —(l. 48) Ś आप्लुत्य (for आप्लुत्य) D1 यत्र (for येन) —(l. 50) D1 2 आजगाम (for आजगाम) —(l. 52) D1 सुमहावीर्य (for स मह°) D1 निरुद्धश्च महानेवा पर्वतैरिव मरुत —(l. 53) D1 महात्मना (for महौजसा) —(l. 55) D1 रुद्र (for रुद्र) —D1 om. l. 58 —(l. 58) D1 सर्वान्सर्वान्हनिष्यामि (for the prior half) —(l. 61) D1 सर्वाञ्छमानो रक्षोभिर् (for the prior half) —(l. 62) Ś पक्षाभ्यामिव युध्यत D1 पक्षाभ्यां च स युध्यत (for the post. half) —(l. 63) D1 2 वक्त्रा (for वक्त्र) —(l. 64) D1 चाङ्कित्कराद् —(l. 65) D1 समय चरणे (for जानुभ्यां चरणे) and चैव पोथयत् (for निष्पिपेष च) —(l. 66) D1 चान्यत्र D1 पूरयत् (for पोथयत्) L (ed.) नेत्रैश्चपोथयत् (for तत्रैव पोथयत्) —(l. 67) After the prior half, D1 ins.:

1* रावणेन प्रचोदिता ।
निहता वायुपुत्रेण रामस्य प्रियकाम्यया ।
ततो देवगणाः सर्वे

—(l. 69) D1 महाद्र (for °नद) —(l. 70) D1 सुरगो (for उरगो) —(l. 71) D1 पूर्व (for सर्व) D1 तत्र सैन्य L (ed.) सर्व वक्त्र (for सर्वं वृत्तं) —(l. 72) D1 महात्मा (for °वीरा) and न शिष्य (for वरिष्ठ) —(l. 74) Ś एक D1 त्वया (for तदा) —(l. 75) Ś1 अपि D1 इव (for एव) —(l. 77) D1 2 इति चाब्रवीत् (for न्यब्रवीत्) D1 न तु नाब्रवीदिति चाब्रवीत् (for the post. half) —(l. 78) Ś D1 दैवमेव D1 पिशाचोऽस्म्यनर्थक (for the post. half) —(l. 80) D1 हनूमानपि तेजस्वी (for the prior half) and निहत्य (for °हत्य) —(l. 82) D1 ते तु (for तदा) —(l. 83) D1 सर्वे (for इति) —(l. 85) D1 प्रमृज्य (for प्रमृज्य) —D1 om. l. 86.

## 60

After 2050*, Ñ V B D13 ( Ñ1 D13 after 2049* ) along with D7 ( first time ) cont..

प्रभूतानि च विघ्नानि निहतानि मया रणे ।
कपिरूपधरस्तत्र कालनेमिर्निशाचरः ।
निहतः सुमहानागो गन्धकाली च मोक्षिता ।
गन्धर्वाणां सहस्राणि निहतानि बहूनि च ।
त्रिकम्पो मेऽभवत्तत्र तेन न त्वरयागतः । [5]
कालात्यये कृते चैवं प्रसादं कर्तुमर्हथ ।
औषध्या यानि चिह्नानि तानि नष्टानि सम्भ्रमात् ।
अत्र सर्वं विचिन्वध्वं मयानीतो ह्ययं गिरिः ।
तस्य तद्वचनं श्रुत्वा साधु साध्विति मारुतिम् ।
प्राशंसद्राघवस्तत्र हनूमन्तं महाबलम् । [10]
देवानां सदृशं कर्म यत्कृतं हरिपुंगव ।
पुनरेव हि नेतव्यो यत आनीत एव हि ।
देवानां नित्यं स्थानं सदा पर्वणि पर्वणि ।
अथ प्रीतो महातेजाः सुग्रीवो वाक्यमब्रवीत् ।
साधु वीर महाभाग यस्य ते बलमीदृशम् । [15]
सुषेणं चाब्रवीत्तत्र सुग्रीवः सुमहायशाः ।
देहि शीघ्रं महाभाग लक्ष्मणस्य महौषधीम् ।
सुग्रीवस्य वचः श्रुत्वा सुषेणस्त्वरितं ययौ ।
स तु दृष्ट्वा गिरिः श्रेष्ठं शशास पवनात्मजम् ।
ततो द्रुमलताकीर्णं नानारत्नविभूषितम् । [20]
पश्यन्स गिरिकुञ्जानि नानापुष्पफलानि च ।
चन्दनागुरुवृक्षांश्च नानापुष्पलतास्तथा ।
हिन्तालसरलांश्चैव कोविदारांश्च पुष्पितान् ।
मन्दारपाटलांश्चैव सिन्दुवारवनानि च ।
कर्णिकारानशोकांश्च करवीरवनानि च । [25]
केसराणि च चूतांश्च नारिकेलवनानि च ।
नानागुल्मलताकीर्णं नानाजातिसमाकुलम् ।
विस्मितः पर्वतं दृष्ट्वा फलमूलोपशोभितम् ।
आरुरोह गिरिं रम्यं नानाधातुविभूषितम् ।
आरुह्य त्वरया चैव सोऽपश्यत्परमौषधिम् । [30]

## 60

(l. 1) Ñ1 D13 बहूनि तत्र विघ्नानि ( for the prior half ). Ñ1 महारण्ये, V3 महाबले ( for मया रणे ). —D13 om. l. 2–4. —(l. 3) Ñ2 V3 B3 D7 म ( for सु- ). —(l. 5) B3 तत्र ( for तत्र ). Ñ1 D13 एष विरचितस्तत्र ( D13 °स्तत्र ) त्वरितो नागतो ह्यहं. —(l. 6) V2 B2–4 चैव ( for चैवं ). V3 B1 कालात्यये चैव ( for the prior half ). Ñ1 D13 कालातिक्रमं त्व तु ( D13 मम ) क्षन्तुमर्हसि मे प्रभो. —Ñ1 D13 om. l. 7–8. —(l. 7) B1 D7 औषध्या. V2 B1.4 D7 अज्ञानि ( for नष्टानि ). —(l. 8) V3 illeg. after सं in the prior half up to the post. half of l. 9. —(l. 10) B1 -कपिं ( for बलम् ). —For l. 9–10, Ñ1 D13 subst.:

> 1* हनूमतो वचः श्रुत्वा रामो हर्षसमन्वितः ।
> अब्रवीत्साधु वीरेति विक्रमं यस्य तादृशम् ।

[ (l. 2) D13 यस्य ते विक्रमो ह्ययं ( for the post. half ) ] —Ñ1 D13 om. l. 11–13. —(l. 11) Ñ2 B3 नेतुं ( for स° ). B2 कृतं वै ( for यत्कृतं ). —(l. 12) V3 ( with hiatus ) यत्र ( for यत ). Ñ2 V1 B3 एव ( for एव ). V1 यत आनीतवानिति ( for the post. half ). —(l. 13) V3 B2.3 नित्य ( for नित्यं ). B1 क्रीडास्थानं हि देवानां ( for the prior half ). —(l. 15) V3 महाबाहो ( for °भाग ). —V3 damaged from ह in the post. half up to वी in the prior half of l. 16. —(l. 16) V3 B1 स ( for सु ). —(l. 17) V3 लक्ष्मणाय ( for लक्ष्मणस्य ). —(l. 18) V1.2 B1.4 त्वरितं ( for °तं ). —For l. 14–18, Ñ1 D13 subst.

> 2* प्रशशंस च सुग्रीवो हनूमन्तं कपीश्वरः ।
> ततोऽब्रवीत्सुसंहृष्टः सुषेणं वैद्यमुत्तमम् ।
> विशल्यकरणीं शीघ्रमुत्पाद्य च महौषधीम् ।
> सुग्रीववचनं श्रुत्वा सुषेणो हयमागतः ।

—Then Ñ1 D13 read l. 29. —G (ed.) om. l. 19–26. Ñ1 D13 om. (hapl.) l. 19–20. —(l. 19) V3 damaged from दृष्ट्वा up to लता in l. 27. B2 शशंस ( for शशास ). V1 प्रशशंसानिलात्मजम् ( for the post. half ). —(l. 21) Ñ1 V1.2 B1 D13 अपश्यत् ( for पश्यन्स ). B2.3 स्थानि ( for -कुञ्जानि ). Ñ1 D13 वनलेखाश्चैव तथा ( for the post. half ). —(l. 23) B2 -शाखाश्च, B3 ( also in marg. as above ) -स्तालांश्च ( for सरलांश्च ). —Ñ2 D7 om. ( hapl. ) from the post. half up to the prior half of l. 24. V3 B1 सु- ( for च ). —(l. 24) V3 illeg. for the prior half. B2 पलाश, B3 कुठार ( also विदार ), B4 चम्पकान् ( for मन्दार ). Ñ2 B4 स्थानि ( for -वनानि ). —B2 transp. l. 25 and l. 26. —B1.4 om. ( hapl. ) l. 26. —(l. 26) Ñ2 V3 D7 केसरांश्चुलकांश्चैव ( for the prior half ). —For l. 22–26, Ñ1 D13 subst.

> 3* वृक्षखण्डानि रम्याणि चन्दनागुरुशोभया ।
> हिन्तालांस्तिलकांश्चैव नीपांश्चन्दनकेसरान् ।
> केतकान्पाटलांश्चैव मुचुकुन्दांश्च किंशुकान् ।
> चम्पकान्काञ्चनारांश्च चूतान्लोध्रान्सचन्दनान् ।
> कुटजांश्चागुरूंश्च नीलाशोकांस्तथा द्रुमान् । [5]

[ (l. 2) D13 हिंताल . —(l. 4) Ñ1 रम्यकान् ( for चम्पकान् ) ]

—Ñ1 D13 om. l. 27. G (ed.) transp. l. 27 and l. 28. —(l. 27) B1 महा ( for first नाना ). V1 द्रुम, B3 लता- ( for गुल्म ). B3 मनकीर्णं ( for लता° ). B2 पक्षि, D7 धातु ( for जाति ). B4 विभूषित ( for समाकुलम् ). G (ed.) शुभ ( for जाति ). —(l. 28) G (ed.) तं गिरिं ( for पर्वतं ). Ñ1 D13 विस्मितोऽभवत्तत्र पवनात्मजः. —(l. 29) V3 दिव्य ( for रम्य ). V3 B3 तं दिव्यं. Ñ1 D13 आरुरोह ततो दिव्यं ( for the prior half ). —(l. 30) V3 damaged from धा in the prior half up to the post. half. B1 ततः शिखरे ( for त्वरया चैव ). Ñ1 D13 अचिरात्तु कालेन विशल्यां तामपश्यत.

